अम्भोविन्दुग्रहणचतुरांश्चातकान् वीक्ष्यमाणाः
श्रेणीभूताः परिगणनया निर्द्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि * ॥२२॥

दग्धमित्यधिकविशेषणम् अर्थवशात् कन्दलीश्च दृष्ट्वेत्यन्वयो द्रष्टव्यः]। उर्व्याः भूमेः गन्धम् आघ्राय जललवमुचो मेघस्य ते तव मार्गं सूचयिष्यन्ति अनुमापयिष्यन्ति । यत्र यत्र वृष्टिकार्य्यं नीपकुसुमादिकं दृश्यते तत्र तत्र त्वया वृष्टमित्यनुमीयते इत्यर्थः ॥ २१ ॥

अम्भइति । प्रक्षिप्तमपि व्याख्यायते । अम्भोविन्दूनां वर्षोदविन्दूनां ग्रहणे सर्वसहापतितमम्बु न चातकस्य हितमिति शास्त्रात् भूस्पृष्टोदकस्य तेषां रोगहेतुत्वादन्तराले एव स्वीकारे चतुरांश्चातकान् वीक्ष्यमाणाः कौतुकात् पश्यन्तः श्रेणीभूताः बद्धपङ्क्तीः । [अभूततद्भावेच्विः] बलाकाः वकपङ्क्तीः परिगणनया एका द्वे तिस्र इति संख्यानेन निर्द्दिशन्तो हस्तेन दर्शयन्तः सिद्धाः स्तनितसमये त्वद्गर्जितकाले सोत्कम्पानि उत्कम्पपूर्वकाणि प्रियसहचरीणां सम्भ्रमेणालिङ्गितानि आसाद्य स्वयं ग्रहणाश्लेषसुखमनुभूयेत्यर्थः। त्वां मानयिष्यन्ति त्वन्निमित्तत्वात् सुखलाभस्येति भावः ॥ २२ ॥

* सपदि वारिधरारवभीरवः । प्रणयिनः परिरब्धुमथाङ्गना ववलिरे वलिरेचितमध्यमाः । शिशुपालवधम् ॥ ६ ॥ ३८ ॥

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्वते पर्वते ते।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत्॥२३॥

उत्पश्यामीति। हे सखे मेघ मत्प्रियार्थं यथा तथा द्रुतं क्षिप्रम् [लघु क्षिप्रमरं द्रुतमित्यमरः]। यियासोः यातुमिच्छोरपि [यातेः सन्नन्तादुप्रत्ययः]। ते तव ककुभैः कुटजकुसुमैः सुरभौ सुगन्धिनि [ककुभः कुटजेऽर्ज्जुने इति शब्दार्णवे]। पर्व्वते पर्व्वते प्रतिपर्व्वतम् [वीप्सायां द्विरुक्तिः]। कालक्षेपं कालविलम्बम् [क्षेपो विलम्बे निन्दायामिति विश्वः]। उत्पश्यामि उत्प्रेक्षे। विलम्बहेतुं दर्शयन् आशुगमनं प्रार्थयते शुक्लेति। सजलानि सानन्दवाष्पाणि नयनानि येषां तैः शुक्लापाङ्गैः मयूरैः [मयूरो वर्हिणो वर्ही शुक्लापाङ्गः शिखावल इति यादवः]। केकाः स्ववाणीः [केका वाणी मयूरस्येत्यमरः]। स्वागतीकृत्य स्वागतवचनीकृत्य प्रत्युद्यातः प्रत्युद्गतः कृतातिथ्यः इत्यर्थः भवान् कथमपि यथाकथञ्चित् आशु गन्तुं व्यवस्येत् उद्युञ्जीत [प्रार्थने लिङ्। शेषे प्रथम इति प्रथमपुरुषः शेषश्चायं भवच्छब्दो युष्मदस्मच्छब्दव्यतिरेकात्]। स्वागतीकृत्य केकाः इत्यत्र केकासु आरोप्यमाणस्य स्वागतवचनस्य प्रकृतप्रत्युद्गमनोपयोगात् परिणामालङ्कारः तदुक्तम् अलङ्कारसर्व्वस्वे आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति॥ २३॥

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नैः *
नीड़ारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः †
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २४ ॥

पाण्डुच्छायेति । हे मेघ त्वयि आसन्ने सन्निकृष्टे सति दशार्णाः नाम जनपदाः सूचिभिन्नैः सूचिषु मुकुलाग्रेषु भिन्नैः विकसितैः [मुकुलाग्रेषु सूचिः स्यादिति शब्दार्णवे] । केतकैः केतकीकुसुमैः पाण्डुच्छायाः हरिणवर्णाः उपवनानां वृतयः कण्टकशाखावरणाः येषु ते तथोक्ताः [प्राकारो वरणः सालः प्राचीरं प्रान्ततो वृतिरित्यमरः] । तथा गृहबलिभुजां काकादिग्रामपक्षिणां नीड़ारम्भैः कुलायनिर्माणैः [कुलायो नीड़मस्त्रियामित्यमरः] । चित्यायाः इमानि चैत्यानि रथ्यावृक्षाः [चैत्यमायतने बुद्धवन्द्ये चोद्देशपादपे इति विश्वः] । आकुलानि सङ्कीर्णानि ग्रामेषु चैत्यानि येषु ते तथोक्ताः तथा परिणतैः पक्वैः फलैः श्यामानि यानि जम्बूवनानि तैः अन्ताः रम्याः [मृतावबसिते रम्ये समाप्तावन्त इष्यते इति शब्दार्णवे] । तथा कतिपयेषु एव दिनेषु स्थायिनो हंसाः येषु ते तथोक्ताः एवंविधाः सम्पत्स्यन्ते भविष्यन्ति । [पोटायुवतिस्तोककतिपयेत्यादिना कतिपयशब्दस्योत्तरपदत्वेऽपि न तच्छब्दस्योत्तरत्वमस्ति अस्य शास्त्रस्य प्रायिकत्वात्] ॥ २४ ॥

---

* प्रतिभान्त्यद्य वनानि केतकानाम् । घटकर्परः ॥ १५ ॥

† फलपरिणतिश्यामजम्बूवनान्ताः । इति वा पाठः ॥

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं * कामुकत्वस्य लब्धा।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मात् †
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्मि ॥२५॥ ‡

तेषामिति। दिक्षु प्रथितं प्रसिद्धं विदिशा इति लक्षणं नामधेयं यस्याः ताम् [लक्षणं नाम्नि चिह्ने चेति विश्वः]। तेषां दशार्णानां सम्बन्धिनीं धीयन्तेऽस्यामिति धानी [कालाधिकरणयोश्चेति ल्युट्]। राज्ञां धानी राजधानी [कर्त्तृयोगलक्षणा षष्ठी समस्यत इति वक्तव्यात् समासः]। तां प्रधाननगरीम् [प्रधाननगरी राज्ञां राजधानीति कथ्यते इति शब्दार्णवे।] गत्वा प्राप्य सद्यः कामुकत्वस्य विलासितायाः [विलासी कामुकः कामी स्त्रीपरो रतिलम्पट इति शब्दार्णवे।] अविकलं समग्रं फलं प्रयोजनं लब्धा लप्स्यते त्वया इति शेषः [कर्म्मणि लुट्]। कुतः यस्मात् कारणात् स्वादु मधुरं चलाः ऊर्म्मयो यस्य तत् चलोर्म्मि तरङ्गितं वेत्रवत्याः नाम नद्याः पयः सभ्रूभङ्गं भ्रूकुटियुक्तं दशनपीड़या इति भावः मुखम् इव अधरम् इव इत्यर्थः तीरोपान्ते

* फलमतिमहत्। इति वा पाठः।

† स्वादुयुक्तं इति वा पाठः।

‡ तस्य च राज्ञः कलिकालभयपुञ्जीभूतकृतयुगानुकारिणी त्रिभुवनप्रसवभूमिरिव विस्तीर्णा मज्जन्मालवविलासिनीकुचतटास्फालनजर्ज्जरितोर्म्मिमालया वेत्रवत्या परिगता विदिशाभिधाना नगरी राजधान्यासीत्॥ कादम्बरीपूर्वभागः॥

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो-
स्त्वत्सम्पर्कात् पुलकितमिव प्रौढ़पुष्पैः कदम्बैः * ।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा-
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि ॥ २६ ॥

तटप्रान्ते यत् स्तनितं गर्ज्जितं तेन सुभगं यथा, स्तनितशब्देन मणितमपि ध्वन्यते [ ऊर्द्ध्वमुखलितकण्ठनासिकं ऊद्धृतं स्तनित-मल्पघोषवदिति लक्षणात् ।] पास्यसि [पिवतेर्लृट् ।] कामिना-मधरास्वादः सुरतादतिरिच्यते इति भावः ॥ २५ ॥

नीचैरिति । हे मेघ ! तत्र विदिशासमीपे विश्रामः विश्रमः खेदापनयः [भावार्थे घञ्प्रत्ययः ।] तस्य हेतोः विश्रामकारणात् विश्रामार्थम् इत्यर्थः [षष्ठी हेतुप्रयोगे इति षष्ठी । विश्रामे-त्यत्र नोदात्तोपदेशस्य मान्तस्यानाचमेरिति पाणिनीये वृद्धि-प्रतिषेधेऽपि विश्रामो वेति चन्द्रव्याकरणे विकल्पेन वृद्धिविधिना-द्रूपसिद्धिः ।] प्रौढ़पुष्पैः प्रवुद्धकुसुमैः कदम्बैः नीपवृक्षैः तत्सम्प-र्कात् तव सङ्गात् पुलकाः अस्य जाताः पुलकितमिव सञ्जातपुलक-मिव स्थितम् [ तारकादित्वादितच्प्रत्ययः ] । नीचैरिति आख्या यस्य तं नीचैराख्यं गिरिम् अधिवसेः गिरौ वसेः इत्यर्थः [उपान्वध्याङ् वस इति कर्म्मत्वम् ] । यो नीचैर्गिरिः पण्याः क्रेयाः स्त्रियः पण्यस्त्रियः वेश्याः [ वारस्त्री गणिका वेश्या पण्यस्त्री रूपजीविनीति शब्दार्णवे ] । तासां रतिषु यः परिमलो गन्धविशेषः [ विमर्द्दोत्थे

* विद्युज्जेयं सहसैव नीपदेशम् । घटकर्परः ॥ १८ ॥

विश्रान्तः सन् व्रज वननदीतीरजातानि * सिञ्च-
न्नुद्यानानां नवजलकणैर्यूथिकाजालकानि ।
गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात् क्षणपरिचितः पुष्पलावीमुखानाम् ॥२७॥

परिमलो गन्धे जनमनोहरे इत्यमरः]। तम् उद्गिरन्ति आवि-र्भावयन्ति इति तथोक्तानि तैः शिलावेश्मभिः कन्दरैः नागराणां पौराणाम् उद्दामानि उत्कटानि यौवनानि प्रथयति प्रकटयति। उत्कटयौवनाः कचित् अनुरक्ताः वाराङ्गनाः विस्रम्भविहारा-काङ्क्षिण्यो मात्रादिभयात् निशीथसमये कञ्चन विविक्तं देशम् आश्रित्य रमयन्ति तच्चात्र बहुलमस्तीति प्रसिद्धिः। अत्र उद्गारशब्दो गौणार्थत्वात् न जुगुप्सावहः प्रत्युत काव्यस्य अति-शोभाकर एव तदुक्तं दण्डिना निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्ति-व्यापाश्रयम्। अतिसुन्दरमन्यत्र ग्राम्यकक्षां विगाहते इति ॥२६॥

विश्रान्त इति। विश्रान्तः सन् तत्र नीचैर्गिरौ विनीताध्व-श्रमः सन् अथ विश्रान्तेरनन्तरं 'वने अरण्ये याः नद्यः तासां तीरेषु जातानि स्वयं रूढानि अकृत्रिमाणि इत्यर्थः [नदनदीति पाठे पुमान् स्त्रियेत्येकशेषो दुर्वारः]। उद्यानानाम् आरामाणां सम्बन्धीनि यूथिकाजालकानि मागधीकुसुममुकुलानि [अथ मागधी गणिका यूथिकेत्यमरः। कोरकजालककलिकाकुड्मल-मुकुलानि तुल्यानीति हलायुधः]। नवजलकणैः सिञ्चन् आर्द्री-

* नगनदीतीरजातानि इति वा समीचीनः पाठः।

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मास्म * भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ॥ २८॥

कुर्व्वन् [अत्र सिञ्चतेरार्द्रीकरणार्थत्वात् द्रवद्रव्यस्य करणत्वं यत्र तु चरणम् अर्थः तत्र द्रवद्रव्यस्य कर्म्मत्वम् यथा रेतः सिक्ता कुमारीषु सुखैर्निषिञ्चन्त्यमिवामृतं त्वचीत्येवमादि । एवं किरती त्यादीनामपि "रजः किरति मारुतः" "अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषितः" इत्यादिष्वर्थभेदाश्रयणेन रजोलाजादीनां कर्म्मत्वकरणत्वे गमयितव्ये] । तथा गण्डयोः कपोलयोः खेदस्य अपनयनेन प्रमार्ज्जनेन या रुजा पीडा [भिदादित्वादङ्प्रत्ययः] । तया क्लान्तानि म्लानानि कर्णोत्पलानि येषां तेषां पुष्पाणि लुनन्तीति पुष्पलाव्यः पुष्पावचायिका स्त्रियः [कर्म्मण्यण् । टिड्-ढाणञित्यादिना ङीप्] । तासां मुखानि तेषां छायायाः अनातपस्य दानात् कान्तिदानञ्च छन्दते [छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातप इत्यमरः] । कामुकदर्शनात् कामिनीनां मुखविकाशो भवति इति भावः क्षणपरिचितः क्षणं संसृष्टः सन् नतु चिरं व्रज गच्छ ॥ २७ ॥

वक्र इति । उत्तराशाम् उदीचीं दिशं प्रति प्रस्थितस्य भवतः पन्थाः उज्जयिनीमार्गः वक्रो यदपि दूरो यद्यपि इत्यर्थः [विन्ध्यात्

* मा च इति वा समीचीनः पाठः ।

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्त्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २९ ॥

उत्तरत्राहिन्याः निर्विन्ध्यायाः प्राग्भागे कियत्यपि दूरे स्थिता उज्जयिनी उत्तरपथस्तु निर्विन्ध्यायाः पश्चिमे इति वक्रत्वम्] तथापि उज्जयिन्याः विशालानगरस्य [विशालोज्जयिनी समेत्युत्पलः] । सौधानाम् उत्सङ्गेषु उपरिभागेषु प्रणयः परिचयः [प्रणयः स्यात् परिचये याच्ञायां सौहृदेऽपि चेति यादवः] । तस्य विमुखः पराङ्मुखो मास्म भूः न भव इत्यर्थः [स्मोत्तरे लङ्चेति चकारादाशीरर्थे लुङ् । न माङ्योगे इत्यडागमप्रतिषेधः] । तत्र उज्जयिन्यां विद्युद्दाम्नां विद्युल्लतानां स्फुरितेभ्यः स्फुरणेभ्यः चकितैः भीतैः लोलापाङ्गैः चञ्चलकटाक्षैः पौराङ्गनानां लोचनैः न रमसे यदि तर्हि त्वं वञ्चितः प्रतारितः असि जन्मवैफल्यं भवेत् इत्यर्थः ॥ २८ ॥

सम्प्रत्युज्जयिनीं गच्छतस्तस्य मध्येमार्गं निर्विन्ध्यासम्बन्धमाह वीचीति । हे सखे पथि उज्जयिनीपथे वीचिक्षोभेण तरङ्गचलनेन स्तनितानां मुखराणाम् [कर्त्तरि क्तः] । विहगानां हंसानां श्रेणिः पङ्क्तिरेव काञ्चीगुणो यस्याः तस्याः स्खलितेन उपलस्खलनेन मदस्खलितेन च सुभगं यथा तथा संसर्पन्त्याः प्रवहन्त्याः गच्छन्त्याश्च तथा दर्शिता प्रकटिता आवर्त्तः अम्भसां भ्रम एव

वेणीभूतप्रतनुसलिलासावतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः * ।
सौभाग्यं ते सुभग विरहावस्थया † व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ ३० ॥

नाभिर्यया [स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः]। निष्क्रान्ता विन्ध्यात् निर्विन्ध्या नाम नदी [निरादयः क्रान्त्वाद्यर्थे पञ्चम्येति समासः। द्विगुप्राप्तापन्नेत्यादिना परवल्लिङ्गताप्रतिषेधः]। तस्याः नद्याः सन्निपत्य सङ्गत्य रसो जलम् अभ्यन्तरे यस्य सः अन्यत्र रसेन शृङ्गारेण अभ्यन्तरः अन्तरङ्गो भव सर्व्वथा तस्याः रसमनुभवेत्यर्थः [शृङ्गारादौ जले वीर्य्ये सुवर्णे विषशुक्रयोः। तिक्तादावमृते चैव निर्यासे पारदे ध्वनौ। आस्वादे च रसं प्राहुरिति शब्दार्णवे]। ननु तत्प्रार्थनामन्तरेण कथं तत्रानुभवो युज्यते इत्यत आह स्त्रीनामिति स्त्रीनां प्रियेषु विभ्रमो विलास एवाद्यं प्रणयवचनं प्रार्थनावाक्यं हि स्त्रीनामेष स्वभावो यत् विलासैरेव रागप्रकाशनं नतु कण्ठत इति विभ्रमश्चात्र नाभिसन्दर्शनादिः उक्त एव॥ २९ ॥

निर्विन्ध्याया विरहावस्थां वर्णयन् तन्निराकरणं प्रार्थयते वेणीति। अवेणी वेणीभूतं वेण्याकारं प्रतनु स्तोकञ्च सलिलं यस्याः सा तयोक्ता वेणीभूतकेशपाशा इति च ध्वन्यते रुहन्ति इति रुहाः [इगुपधलक्षणः कः]। तटयोः रुहाः ये तरवः तेभ्यः भ्रश्यन्ति इति तयोक्तैः जीर्णपर्णैः शुष्कपत्रैः पाण्डुच्छाया पाण्ड-

* शीर्णपर्णैः इति वा पाठः। † असुभगविरहावस्थया। इति वा पाठः

प्राप्यावन्तीन् * उदयनकथाकोविदग्रामवृद्धान्
पूर्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।

वर्णा अत एव हे सुभग विरहावस्थया पूर्वोक्तप्रकारया करणेन अतीतस्य एतावन्तं कालम् अतीत्य गतस्य प्रोषितस्य इत्यर्थः ते तव सौभाग्यं सुभगत्वम् [हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः]। व्यञ्जयन्ती प्रकाशयन्ती स खलु सुभगो यम् अङ्गनाः कामयन्ते इति भावः असौ पूर्वोक्ता सिन्धुः नदी निर्विन्ध्या [स्त्री नद्यां ना नदे सिन्धुर्देशभेदेऽम्बुधौ गजे इति वैजयन्ती]। येन विधिना व्यापारेण कार्श्यं त्यजति सः विधिः त्वया एव उपपाद्यः कर्त्तव्यः इत्यर्थः स च विधि एकत्र वृष्टिः अन्यत्र सम्भोगः तदभावनिबन्धनत्वात् कार्श्यस्य इति भावः। इयं पञ्चमी मदनावस्था तदुक्तं रतिरहस्ये नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः। निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः। उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युरिति। तामतीतस्येति पाठमाश्रित्य सिन्धुनाम नद्यन्तरमिति व्याख्यानं तु सिन्धुर्नाम कश्चित् नदः काश्मीरदेशे स्थितः नदी तु कुत्रापि नास्तीत्युपेक्षमित्याचक्षते ॥ ३० ॥

प्राप्येति। विदन्ति इति विदाः [इगुपधलक्षणः कः]। ओकसो वेद्यस्थानस्य विदाः कोविदाः [ओकारलोपः पृषोदरादित्वात्

* असौ (अवन्तिनाथः) महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः। तमिस्रपक्षेऽपि सह प्रियाभिः ज्योत्स्नावतो निर्विशति प्रदोषान् ॥ अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते। सिप्रातरङ्गानिलकम्पितासु विहर्त्तुमुद्यानपरम्परासु ॥ रघुवंशम् ॥ ६ ॥ ३४-५ ॥

स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत् खण्डमेकम् ॥३१॥*

साधुः] उदयनस्य वत्सराजस्य कथानां वासवदत्ताहरणाद्यद्भुतोपाख्यानानां कोविदाः तत्त्वज्ञाः ग्रामेषु ये वृद्धाः ते सन्ति येषु तान् अवन्तीन् तन्नामजनपदान् प्राप्य तत्र पूर्वोद्दिष्टां पूर्वोक्तां प्रणयविमुखो मास्म भूरुज्जयिन्याः इत्युक्तां श्रीविशालां सम्पत्तिमहतीम्। [शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्यते इति शाश्वतः]। विशालां पुरीम् उज्जयिनीमनुसर व्रज कथंमिव स्थितां सुचरितफले पुण्यफले स्वर्गोपभोगलक्षणे स्वल्पीभूते अत्यल्पावशिष्टे सति इत्यर्थः गां भूमिं गतानाम् [गौरिला कुम्भिनी क्षमेत्यमरः]। पुनरपि भूर्लोकगतानामित्यर्थः स्वर्गिणां स्वर्गवतां जनानां शेषैः भुक्तशेषैः पुण्यैः सुकृतैः हृतम् आनीतम् स्वर्गार्थानुष्ठितकर्मशेषाणां स्वर्गदानावश्यम्भावात् इति भावः कान्तिरस्य अस्तीति कान्तिमत् उज्ज्वलं सारभूतमित्यर्थः एकं भुक्तात् अन्यत् [एके मुख्यान्यकेवला इत्यमरः]। दिवः स्वर्गस्य खण्डमिव स्थितामित्युत्प्रेक्षा। एतेन अतिक्रान्तसकलभूर्लोकनगरसौभाग्यसारत्वम् उज्जयिन्या व्यज्यते ॥ ३१ ॥

* अस्तीहोज्जयिनी नाम नगरी भूषणं भुवः। हसन्तीव सुधाधौतैः प्रासादैरमरावतीम्। यस्यां वसति विश्वेशो महाकालवपुः स्वयं। शिथिलीकृतकैलासनिवासव्यसनो हरः। कथासरित्सागरः ॥११॥ ३१-२॥

दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः ।
यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥३२॥ *

दीर्घीकुर्वन्निति । यत्र विशालायां प्रत्यूषेषु अहर्मुखेषु [प्रत्यूषोऽहर्मुखं कल्यमित्यमरः] । पटु प्रस्फुटं मदकलं मदेन अव्यक्तमधुरम् । [ध्वनौ तु मधुरास्फुटे कल इत्यमरः] । सारसानां पक्षिविशेषाणाम् [सारसो मैथुनी कामो गोनर्दः पुष्कराह्वय इति यादवः] । यद्वा सारसानां हंसानाम् [चक्राङ्गः सारसो हंस इति शब्दार्णवे] । कूजितं रुतं दीर्घीकुर्वन् सन्तानयन् इत्यर्थ यावद्वातं शब्दानुवृत्तेरिति भावः एतेन प्रियतमः स्वचाटुवाक्यानुसारि क्रीड़ापक्षिकूजितम् अविच्छिन्नीकुर्वन् इति च गम्यते स्फुटितानां विकसितानां कमलानाम् आमोदेन परिमलेन सह या मैत्री संसर्गः तेन कषायः सुरभिः [रागद्रव्ये कषायोऽस्त्री निर्यासे सौरभे रसे इति यादवः] । अन्यत्र विमर्दगन्धो इत्यर्थः [विमर्दोत्थे परिमलो गन्धे जनमनोहरे । आमोदः सोऽतिनिर्हारीत्यमरः] । अङ्गानुकूलो मान्द्यात् सुखस्पर्शः अन्यत्र गाढ़ालिङ्गन-

* रामाणां रमनीयवक्त्रशशिनः स्वेदोदविन्दुप्लुतो व्यालोलालकवल्लरीं प्रचलयन् धुन्वन् नितम्बाम्बरं । प्रातर्वाति मधौ प्रकाशविकशद्राजीवराजीरजोजालामोदमनोहरो रतिरसग्लानिम् हरन्मारुतः ॥ अमरुशतकम् ॥ ५८ ॥

जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै-*
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ।
हर्म्येष्वस्याः कुसुमसुरभिष्वध्वखेदं नयेथा-
लक्ष्मीं पश्यन्† ललितवनितापादरागाङ्कितेषु ॥ ३३॥

दत्तगात्रसंवाहनः इत्यर्थः [भवभूतिना च उक्तम् 'अशिथिलपरिरम्भैर्दत्तसंवाहनानीति । संवाह्यन्ते च सुरतश्रान्ताः प्रियैर्युवतयः एतत् कविरेव वक्ष्यति [सम्भोगान्ते मम समुचितो हस्तसंवाहनाना-मिति ] । शिप्रा नाम काचित् तत्रत्या नदी तस्याः वातः शिप्रा-वातः शिप्राग्रहणं शैत्यद्योतनार्थं प्रार्थना सुरतस्य याच्ञा तत्र चाटूनि करोतीति तथोक्तः पुनः सुरतार्थं प्रियवचनप्रयोक्ता इत्यर्थः [कर्म्मण्यण्प्रत्ययः] । प्रियतमः वल्लभः इव स्त्रीनां सुरतग्लानिं सम्भोगखेदं हरति नुदति चाटूक्तिभिर्विस्मृतपूर्वखेदाः स्त्रियः प्रियतमप्रार्थनां सफलयन्ति इति भावः । प्रार्थनाचाटुकार इत्यत्र खण्डितनायिका अनुनीतेति व्याख्याने सुरतग्लानिहरणं न सम्भवति तस्याः पूर्वं सुरताभावात् पश्चात्तनसुरतग्लानिहरणं तु नेदानीन्तनकोपशमनार्थचाटवचनसाध्यमित्युपेक्षैवोचिता विवेकिनाम् । [ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति दशरूपके] ॥ ३२ ॥

जालोद्गीर्णैरिति । जालोद्गीर्णैः गवाक्षमार्गनिर्गतैः [जालं गवाक्ष आनाये जालके कपटे गणे इति यादवः] । केशसंस्कार-

* धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् । कुमारसम्भवम् ।७।१८। † अध्वखिन्नान्तरात्मा त्यक्त्वा खेदमिति वा पाठः ।

भर्त्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य ।
धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या-
स्तोयक्रीड़ानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३४ ।

धूपैः वनिताकेशवासनार्थैः गन्धद्रव्यधूपैः इत्यर्थः [अत्र संस्कार-धूपयोः तादर्थ्येऽपि यूपदार्वादिवत् प्रकृतिविकारत्वाभावात् अश्व-घासादिवत् षष्ठीसमासो न चतुर्थीसमासः] । उपचितवपुः परि-पुष्टशरीरः बन्धो बन्धुरिति वा प्रीत्या भवनशिखिभिः गृहमयूरैः दत्तः नृत्यम् एव उपहारः उपायनं यस्मै स तथोक्तः [उपायन-मुपग्राह्यमुपहारस्तथोपदेत्यमरः] । कुसुमैः सुरभिषु सुगन्धिषु ललितवनिताः सुन्दरस्त्रियः [ललितं त्रिषु सुन्दरमिति शब्दा-र्णवे] । तासां पादरागेण लाक्षारसेन अङ्कितेषु चिह्नितेषु हर्म्येषु धनिकभवनेषु अस्याः उज्जयिन्याः लक्ष्मीं पश्यन् अध्वना अध्व-गमनेन खेदं क्लेशं नयेथाः अपनय ॥ ३३ ॥

भर्त्तुरिति । भर्त्तुः स्वामिनः नीलकण्ठस्य भगवतः कण्ठस्येव छविर्यस्य असौ कण्ठच्छविः इति हेतोः गणैः प्रमथैः [गणस्तु गणनायां स्यात् गणेशे प्रमथे चये इति शब्दार्णवे] । सादरं यथा तथा वीक्ष्यमाणः सन् प्रियवस्तुसादृश्यात् अतिप्रियत्वं भवेत् इति भावः त्रयाणां भुवनानां समाहारः त्रिभुवनम् [तद्धितार्थेत्यादिना समासः] । तस्य गुरोः त्रैलोक्यनाथस्य चण्डीश्वरस्य कात्यायनी-वल्लभस्य पुण्यं पावनं धाम महाकालाख्यं स्थानं यायाः गच्छ

अप्यन्यस्मिन् जलधर महाकालम्* आसाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।
कुर्वन् सन्ध्याबलिपटहतां शूलिनः श्लाघनीया-
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥३५॥

[विध्यर्थे लिङ्] । श्रेयस्करत्वात् सर्व्वथा गन्तव्यम् इति भावः [उक्तञ्च स्कान्दे आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम् । मर्त्यलोके महाकालं दृष्ट्वा काममवाप्नुयादिति] । न केवलं मुक्तिस्थानमिदं किन्तु विलासस्थानमपीत्याह धूतेति कुवलयरजो-गन्धिभिः उत्पलपरागगन्धवद्भिः तोयक्रीड़ासु निरतानाम् आसक्तानां युवतीनां स्नानं स्नानीयं चन्दनादि [करणे ल्युट् । स्नानीयेऽभिषवे स्नानमिति यादवः] । तेन तिक्तैः सुरभिभिः [कटुतिक्तकषायास्तु सौरभे च प्रकीर्त्तिता इति हलायुधः] । सौगन्ध्यातिशयार्थं विशेषणद्वयम् गन्धवत्याः नाम नद्याः तत्र-त्यायाः मरुद्भिः मारुतैः धूतोद्यानं कम्पितोपवनम् इति धाम्नो विशेषणम् ॥ ३४ ॥

अपीति । हे जलधर महाकालं नाम पूर्वोक्तं चण्डीश्वर-स्थानम् अन्यस्मिन् सन्ध्यातिरिक्तेऽपि काले आसाद्य प्राप्य ते तव स्थातव्यं त्वया स्थातव्यम् इत्यर्थः [कृत्यानां कर्त्तरि वेति षष्ठी] । यावत् यावता कालेन भानुः सूर्य्यः नयनविषयं दृष्टिपथम् अत्येति

* एवञ्च क्रमेणावन्तिविषयं प्रापुः । तत्र च शिप्राजले स्नात्वा श्री-महाकालदेवञ्च प्रणम्य यावदग्रतो गच्छन्ति । पञ्चतन्त्रकं पञ्चमं तन्त्रम् ।

पादन्यासैः क्वणितरशनास्तत्र लीलावधूतैः
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।
वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू-
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान्*॥३६॥

अतिक्रामति आ अस्तमयात् स्थातव्यम् इत्यर्थः [यावत् इत्येतत् अवधारणार्थे यावत् तावच्च साकल्येऽवधौ मानेऽवधारणे इत्यमरः।] किमर्थम् अत आह कुर्वन्निति श्लाघनीयां प्रशस्यां शूलिनः शिवस्य सन्ध्यायां बलिः पूजा तत्र पटहतां कुर्वन् सम्पादयन् आमन्द्राणाम् ईषद्गम्भीराणां गर्ज्जितानाम् अविकलम् अखण्डं फलं लप्स्यसे प्राप्स्यसि [लभेः कर्त्तरि लृट्।] महाकालनाथबलि-पटहत्वेन विनियोगात्ते गर्ज्जितसाफल्यं स्यात् इत्यर्थः ॥ ३५ ॥

पादन्यासैरिति। तत्र सन्ध्याकाले पादन्यासैः चरणनिक्षेपैः नृत्याङ्गैः क्वणिताः शब्दायमानाः रशनाः यासां ताः तथोक्ताः [क्वणतेरकर्म्मकत्वात् गत्यर्थाकर्मकेत्यादिना कर्त्तरि क्तः।] लीलया विलासेन अवधूतैः कम्पितैः रत्नानां कङ्कणमणीनां छायया कान्त्या खचिताः रूषिताः बलयः चामरदण्डाः येषां तैः [बलि-श्चामरदण्डे च जराविश्लथचर्म्मणीति विश्वः] चामरैः बाल-व्यजनैः क्लान्तहस्ताः [एतेन दैशिकं नृत्यं सूचितम् तदुक्तं नृत्य-सर्व्वस्वे [खड्गकन्दुकवस्त्रादिदण्डिकाचामरस्रजः। वीणाञ्च धृत्वा

* विलोलनेत्रभ्रमरैर्गवाक्षाः। रघुवंशम्। ७। ११।

पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजवापुष्परक्तं दधानः ।
नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ३७ ॥

यत् कुर्य्यान्नृत्यं तत् दैशिकं भवेदिति ।] वेश्याः महाकालनाथम् उपेत्य नृत्यन्त्यो गणिकाः त्वत्तो नखपदेषु नखक्षतेषु सुखान् सुखकरान् [सुखहेतौ सुखे सुखमिति शब्दार्णवे ।] वर्षस्य अग्रविन्दून् प्राप्य त्वयि मधुकरश्रेणिदीर्घान् अपाङ्गान् आमोक्ष्यन्ते परैः उपकृताः सन्तः सद्यः प्रत्युपकुर्व्वन्ति इति भावः । कामिनीदर्शनीयत्वलक्षणं शिवोपासनाफलं सद्यो लप्स्यसे इति ध्वनिः ॥३६॥

पश्चादिति । पश्चात् सन्ध्यावल्यनन्तरं पशुपतेः शिवस्य नृत्यारम्भे ताण्डवप्रारम्भे प्रतिनवजवापुष्परक्तं प्रत्यग्रजवाकुसुमारुणं सन्ध्यायां भवं सान्ध्यं तेजो दधानः उच्चैः उन्नतं भुजा एव तरवः तेषां वनं मण्डलेन मण्डलाकारेण अभिलीनः अभिव्याप्तः सन् [कर्त्तरि क्तः ।] भवान्या भवपत्न्या [इन्द्रवरुणभवशर्व्वेत्यादिना ङीष् आनुगागमश्च ।] शान्तः उद्वेगः गजाजिनदर्शनभयं ययोः ते अत एव स्तिमिते निश्चले नयने यस्मिन् कर्म्मणि तत् तथोक्तम् [उद्वेगस्त्वरिते क्लेशे भये मन्थरगामिनीति शब्दार्णवे ।] भक्तिः पूज्येषु अनुरागः [भावार्थे क्तिन्प्रत्ययः ।] दृष्टा भक्तिर्यस्य स दृष्टभक्तिः सन् पशुपतेः आर्द्रं शोणितार्द्रं यत् नागाजिनं गजचर्म्म [अजिनं चर्म्म कृत्तिः स्त्रीत्यमरः ।] तत्र इच्छां हर निवर्त्तय

गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।

त्वम् एव तत्स्थाने भव इत्यर्थः । गजासुरमर्द्दनानन्तरं भगवान् महादेवः तदीयम् आर्द्रांजिनं भुजमण्डलेन बिभ्रत् ताण्डवं चकार इति प्रसिद्धिः । दृष्टभक्तिरिति कथं रूपसिद्धिः दृष्टशब्दस्य स्त्रियाः पुंवत् इत्यादिना पुंवद्भावस्य दुर्घटत्वात् अपूरणीप्रियादिष्विति निषेधात् भक्तिशब्दस्य प्रियादिषु पाठादिति तदेतत्सोढं दृढभक्तिरिति शब्दम् आश्रित्य प्रतिविहितं गणव्याख्याने दृढं भक्तिरस्येति नपुंसकं पूर्वपदम् अदार्ढ्यनिवृत्तिपरत्वे दृढशब्दात् लिङ्गविशेषस्य अनुपकारित्वात् स्त्रीत्वम् अविवक्षितमिति । भोजराजस्तु भक्तौ च कर्मसाधनायाम् इत्यनेन सूत्रेण भज्यते सेव्यते इति कर्मार्थत्वे भवानीभक्तिरित्यादि भवति भावसाधनायां तु स्थिरभक्तिर्भवान्यामित्यादि भवतीत्याह । तदेतत् सर्वं सम्यक् विवेचितं रघुवंशसञ्जीवन्यां दृढभक्तिरिति ज्येष्ठे इत्यत्र । तस्मात् दृष्टभक्तिरित्यत्रापि मतभेदेन पूर्वपदस्य स्त्रीत्वेन नपुंसकत्वेन च रूपसिद्धिरस्तीति स्थितम् ॥ ३७ ॥

इत्थं महाकालनाथस्य सेवाप्रकारमभिधाय पुनरपि नरसञ्चारप्रकारमाह गच्छन्तीनामिति । तत्र उज्जयिन्यां नक्तं रात्रौ रमणवसतिं प्रियभवनं प्रति गच्छन्तीनां योषिताम् अभिसारिकाणाम् इत्यर्थः सूचिभिः भेद्यैः अतिसान्द्रैरित्यर्थः तमोभिः रुद्धालोके निरुद्धदृष्टिप्रसारे नरपतिपथे राजमार्गे कनकस्य निकषः

सौदामन्या कनकनिकषस्निग्धया * दर्शयोर्व्वीं
तोयोत्सर्गस्तनितमुखरो मास्म भूर्विक्लवास्ताः ॥३८॥ †
तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः ।

निकष्यते इति व्युत्पत्त्या निकषोपलगतरेखा तस्येव स्निग्धं तेजो यस्याः तया [स्निग्धं तु मसृणे सान्द्रे रम्ये क्लीवं तु तेजसीति शब्दार्णवे]। सुदाम्ना अद्रिणा एकदिक् सौदामनी विद्युत् [तेनैकदिगित्यण् प्रत्ययः]। तया उर्व्वीं मार्गं दर्शय किञ्च तोयोत्सर्गस्तनिताभ्यां वृष्टिगर्ज्जिताभ्यां मुखरः शब्दायमानो मास्म भूः कुतः तवः योषितः विक्लवाः भीरवः ततो वृष्टिगर्ज्जिते न कार्य्ये इत्यर्थः। नात्र तोयोत्सर्गसहितं स्तनितमिति विग्रहः विशिष्टस्येव केवलस्तनितस्यापि अनिष्टत्वात् नच द्वन्द्वपक्षे अल्पाच्तरमिति पूर्वनिपातशास्त्रविरोधः लक्षणहेत्वोः क्रियाया इति सूत्रे विपरीतनिर्द्देशेन पूर्वनिपातशास्त्रस्य अनित्यत्वज्ञापनादिति ॥ ३८ ॥

तामिति। चिरं विलसनात् स्फुरणात् खिन्नं विद्युत् एव कलत्रं यस्य स भवान् सुप्ताः पारावताः कलरवाः यस्यां तस्यां विविक्तायाम् इत्यर्थः [पारावतः कलरवः कपोत इत्यमरः।]

* कनकनिकषच्छायया इति पाठः।

† सुतीक्ष्णमुच्चैर्ध्वनतां पयोमुचां घनान्धकारावृतशर्व्वरीष्वपि।
तडित्प्रभादर्शितमार्गभूमयः प्रयान्ति रागादभिसारिकाः स्त्रियः॥
ऋतुसंहारः। वर्षावर्णनम् । १० ।

दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषं।
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः॥ ३९ ॥
तस्मिन् काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।

जनसञ्चारः तत्र असम्भावित एव इति भावः कस्याञ्चित् भवनस्य वलभौ आच्छादने उपरिभागे इत्यर्थः [आच्छादनं स्याद्वलभी गृहाणामिति हलायुधः।] तां रात्रिं नीत्वा सूर्य्ये दृष्टे दिने सति इत्यर्थः पुनरपि अध्वशेषं वाहयेत् तथाहि सुहृदां मित्राणाम् अभ्युपेता अङ्गीकृता अर्थस्य प्रयोजनस्य कृत्या क्रिया यैः ते अभ्युपेतसुहृदर्था इत्यर्थः [सापेक्षत्वेऽपि गमकत्वात् समासः। कृत्या क्रियादेवतयोः कार्य्ये स्त्री कुपिते त्रिष्विति यादवः। कृञः श चेति चकारात् क्यप्।] न मन्दायन्ते खलु न मन्दाः भवन्ति हि न विलम्बन्ते इत्यर्थः। लोहितादिडाज्भ्यः क्यष् वा क्यष इत्यात्मनेपदम् ॥ ३८ ॥

तस्मिन्निति। तस्मिन् काले पूर्वोक्ते सूर्य्योदयकाले प्रणयिभिः प्रियतमैः खण्डितानां योषितां नायिकाविशेषाणाम् [ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायितेति दशरूपके।] नयनसलिलं शान्तिं नेयं नेतव्यम् [नयतिर्द्विकर्मकः।] अतो हेतोः भानोः वर्त्म आशु शीघ्रं त्यज तस्य आवरको मा भूः इत्यर्थः। विपक्षे अनिष्टमाचष्टे सोऽपि भानुः नलानि अम्बुजानि अस्याः सन्तीति नलिनी पद्मिनी [हणेऽम्बजे नलं ना तु राशि नाले

प्रालेयास्रं कमलवदनात् * सोऽपि हर्त्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ४० ॥
गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।

तु न स्त्रियामिति शब्दार्णवे ।] तस्याः स्वकान्तायाः कमलं स्वकुसुमम् एव वदनं तस्मात् प्रालेयं हिमम् एव अस्रम् अश्रु प्रहर्त्तुं शमयितुं प्रत्यावृत्तः प्रत्यागतः नलिन्याश्च भर्त्तुर्भानोः देशान्तरे नलिन्यन्तरगमनात् खण्डितात्वम् इत्याशयः ततः त्वयि करान् अंशून् रुणद्धि इति कररुत् [क्विप् ।] तस्मिन् कररुधि सति हस्तरोधिनि सति इति च गम्यते [बलिहस्तांशवः कराः इत्यमरः ।] अनल्पाभ्यसूयः अधिकविद्वेषः स्यात् प्रायेण इच्छाविशेषविघातात् द्वेषो रोषविशेषश्च कामिनामिति भावः । किञ्च ब्राह्मणं चार्कमीशानं विष्णुं वा द्वेष्टि योजनः । श्रेयांसि तस्य नश्यन्ति रौरवञ्च भवेत् ध्रुवमिति निषेधात् कार्य्यहानिश्च इति ध्वनिः ॥ ४० ॥

गम्भीराया इति । गम्भीरायाः नाम सरितः उदात्तनायिका च ध्वन्यते प्रसन्ने अनुरक्तत्वात् दोषरहिते चेतसि इव प्रसन्ने निर्मले पयसि प्रकृत्या स्वभावेन सुभगः सुन्दरः [सुन्दरेऽधिकभाग्ये च दुर्दिनेतरवासरे । तुरीयांशे श्रीमति च सुभगः इति

---

* कमलनयनात् इति वा पाठः ।

तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्य्यात्
मोघीकर्त्तुं चटुलशफरोद्वर्त्तनप्रेक्षितानि * ॥ ४१॥
तस्याः किञ्चित् करधृतमिव प्राप्तवानीरशाखं
हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।

शब्दार्णवे ।] ते, तव छाया चासौ आत्मा च सोऽपि प्रतिविम्ब-शरीरं वा प्रवेशं लप्स्यते साक्षात् प्रवेशम् अनिच्छोरपि इति भावः तस्मात् छायाद्वारापि प्रवेशावश्यम्भावित्वात् अस्याः गम्भीरायाः कुमुदवत् विशदानि धवलानि चटुलानि शीघ्राणि शफराणां मीनानाम् उद्वर्त्तनानि उत्लुण्ठितान्येव प्रेक्षितानि अवलोकनानि [त्रिषु स्यात् चटुलं शीघ्रमिति विश्वः ।] एतावदेव गम्भीराया अनुरागलिङ्गम् धैर्य्यात् धार्ष्ट्यात् वैमत्यात् मोघीकर्त्तुं विफलीकर्त्तुं न अर्हसि न अनुरक्ता विप्रलभ्भव्या इत्यर्थः । धूर्त्तलक्षणं तु क्लिश्नाति नित्यं गमितां कामिनीमिति सुन्दरः । उपेत्यरक्तां यत्नेन रक्तां धूर्त्तो विमुञ्चतीति ॥ ४१ ॥

तस्या इति । हे सखे ! प्राप्ता वानीरशाखा वेतसशाखा येन तत् तथोक्तम् अतएव किञ्चित् ईषत् करधृतं हस्तावलम्बितम् इव स्थितं मुक्तः त्यक्तः रोधः तटम् एव नितम्बः कटिः येन तत्

* सततार सैकतवतीरभितः शफरीपरिस्फुरितचारुदृशः ।
ललिताः सखीरिव बृहज्जघनाः सुरनिम्नगामुपयतीः सरितः
किरातार्ज्जुनीयम् ।६ । १९ ।

प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि
ज्ञातास्वादो विवृतजघनां * को विहातुं समर्थः ॥४२॥
त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः †
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।

तथोक्तम् [नितम्बः पश्चिमे श्रोणिभागेऽद्रिकटके कटाविति यादवः।]। नीलं कृष्णवर्णं तस्याः गम्भीरायाः सलिलमेव वसनं हृत्वा अपनीय [प्रस्थानसमये प्रेयसीवसनहरणं विरह-तापापनोद-नार्थम् इति प्रसिद्धम्।] लम्बमानस्य पीतसलिलभरात् लम्ब-मानस्य अन्यत्र जघनारूढ़स्य ते तव प्रस्थानं प्रयाणं कथमपि कृच्छ्रेण भावि कृच्छ्रत्वे हेतुमाह ज्ञातेति ज्ञातास्वादः अनुभूत-रसः कः पुमान् विवृतं प्रकटीकृतं जघनं कटिः तत्पूर्बभागो वा यस्याः ताम् [जघनं स्यात् कटौ पूर्बश्रोणिभागापरांशयोरिति यादवः।] विहातुं त्यक्तुं समर्थः न कोऽपि इत्यर्थः ॥ ४२ ॥

त्वदिति। त्वन्निष्यन्देन तव वृष्ट्या उच्छ्वसितायाः उपवृंहि-तायाः वसुधायाः भूमेः गन्धस्य सम्पर्केण रम्यः सुरभिः इत्यर्थः [स्रोतःशब्देन इन्द्रियवाचिना तद्विशेषो घ्राणं लक्ष्यते स्रोत इन्द्रिये निम्नगारये इत्यमरः।] स्रोतोरन्ध्रेषु नासाग्रकुहरेषु यत् ध्वनितं शब्दः तेन सुभगं यथा तथा दन्तिभिः गजैः पीयमानः

* पुलिनजघनाम् इति वा पाठः ।
† गन्धसम्पर्कपुण्यः इति वा पाठः ।

नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥४३॥
तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः ।

वसुधागन्धलोभात् आघ्रायमाण इत्यर्थः अनेन मान्द्यम् उच्यते काननेषु वनेषु उदुम्बराणां जन्तुफलानाम् [उदुम्बरे जन्तुफलो यज्ञाङ्गो हेमदुग्धक इत्यमरः ।] परिणमयिता परिपाचयिता [मितां ह्रस्व इति ह्रस्वः ।] शीतो वायुः देवपूर्वं देवशब्दपूर्वं गिरिं देवगिरिम् इत्यर्थः उपजिगमिषोः उपगन्तुम् इच्छोः [गमेः सन्नन्तादुप्रत्ययः ।] ते तव नीचैः शनैः वास्यति त्वां वीजयिष्यति इत्यर्थः । सम्बन्धमात्रविवक्षायां षष्ठी । देवपूर्वं गिरिम् इत्यत्र देवपूर्वत्वं गिरिशब्दस्य नतु संज्ञिनस्तदर्थस्येति संज्ञायाः संज्ञिगतत्वाभावात् अवाच्यवचनं दोषमाहुरालङ्कारिकाः तदुक्तम् एकावल्यां यदवाच्यस्य वचनमवाच्यवचनं हि तदिति । समाधानं तु देवशब्दविशेषितेन गिरिशब्देन शब्दपरेण मेघोपगमयोग्यो देवगिरिर्लक्ष्यते इति कथञ्चित् सम्पाद्यम् ॥ ४३ ॥

तत्रेति । तत्र देवगिरौ नियता वसतिः यस्य तं नित्यसन्निहितम् इत्यर्थः [पुरा किल तारकाख्यासुरविजयसन्तुष्टसुरप्रार्थनावशात् भगवान् भवानीनन्दनः स्कन्दो नित्यम् अहमिह सह शिवाभ्यां वसामि इत्युक्त्वा तत्र वसति [इति प्रसिद्धिः ।] स्कन्दं

रक्षाहेतोर्नवशशिभृता वासवीनां चमूनाम्
अत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः ॥ ४४ ॥*

कुमारं स्वामिनं पुष्पाणां मेघः पुष्पमेघः पुष्पमेघीकृतात्मा काम-रूपत्वात् पुष्पवर्षुकमेघीकृतविग्रहः सन् व्योमगङ्गाजलार्द्रैः पुष्पासारैः पुष्पसम्पातैः [धारासम्पात आसार इत्यमरः ।] भवान् स्वयम् एव स्नपयतु अभिषिञ्चतु स्वयं पूजायाः उत्तमत्वात् इति भावः । [तथा च शम्भुरहस्ये स्वयं यजति चेत् देवमुत्तमा सोद-रात्मजैः । मध्यमा याजयेद्भृत्यैरधमा याजनक्रियेति ।] स्कन्दस्य पूज्यत्वसमर्थकम् अर्थान्तरं न्यस्यति रक्षेति तत् भगवान् स्कन्द इत्यर्थः [विधेयप्राधान्यात् नपुंसकनिर्देशः ।] वासवस्य इमाः वासव्यः [तस्येदमित्यण्] तासां वासवीनाम् ऐन्द्रीणां चमूनां सेनानां रक्षा एव हेतुः तस्य रक्षाहेतोः रक्षया कारणेन रक्षार्थम् इत्यर्थः [षष्ठी हेतुप्रयोगे इति षष्ठी ।] नवशशिभृता भगवता चन्द्रशेखरेण वहति इति वहः [पचाद्यच् ।] हुतस्य वहः हुतवहः वह्निः तस्य मुखे सम्भृतं सञ्चितम् आदित्यम् अतिक्रान्तम् अत्यादित्यम् [अत्यादयः क्रान्ताद्यर्थे द्वितीयेति समासः ।] तेजो हि साक्षात् भगवतो हरस्य एव मूर्त्यन्तरम् इत्यर्थः अतः पूज्यमिति भावः । मुखग्रहणं तु शुद्धत्वसूचनार्थं [तदुक्तं शम्भुरहस्ये गवां पश्चात् द्विजस्याङ्घ्रिर्योगिनां हृत् कवेर्वचः । परं शुचितमं विद्यान्मुखं स्त्रीवह्निवाजिनामिति] ॥ ४४ ॥

* कुमारसम्भवम् । ९ । १-१५

ज्योतिर्लेखावलयि गलितं यस्य वर्हं भवानी
पुत्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं *
पश्चादद्रिग्रहणगुरुभिर्गर्जितैर्नर्त्तयेथाः † ॥ ४५ ॥

ज्योतिरिति । ज्योतिषः तेजसः लेखाः राजयः तासां वलयं मण्डलम् अस्य अस्तीति तथोक्तं गलितं भ्रष्टं नतु लौल्यात् स्वयं छिन्नमिति भावः यस्य मयूरस्य वर्हं पिच्छम् [पिच्छवर्हे नपुंसके इत्यमरः ।] भवानी गौरी पुत्रप्रेम्णा पुत्रस्नेहेन कुवलयस्य दलं पत्रं तत्प्रापि तद्योगि यथा तथा कर्णे करोति दलेन सह धारयति इत्यर्थः यद्वा दलप्रापि दलभाजि दलार्हे कर्णे करोति [क्विबन्तात् सप्तमी ।] दलं परिहृत्य तत्स्थाने वर्हं धत्ते इत्यर्थः । नाथस्तु कुवलयदलक्षेपीति पाठमनुसृत्य क्षेपो निन्दा अपसारणं वेति व्याख्यातवान् । हरशशिरुचा हरशिरश्चन्द्रिकया धौतापाङ्गं स्वतोऽपि शौक्ल्यात् अतिधवलितनेत्रान्तम् [अपाङ्गौ नेत्रयोरन्तावित्यमरः ।] पावकस्य अग्नेः अपत्यं पावकिः स्कन्दः [अत इञ् इति इञ् ।] तस्य तं पूर्वोक्तं मयूरं पश्चात् पुष्पाभिषेचनानन्तरम् अद्रेः देवगिरेः कर्तुः ग्रहणेन गुहासंक्रमणेन गुरुभिः प्रतिध्वानमहद्भिः इत्यर्थः गर्ज्जितैः नर्त्तयेथाः नृत्यं कारय मार्द-

* हरशशिरुचाप्याययेस्तं मयूरम् । इति वा पाठः ।
† जलदपङ्क्तिरनर्तयदुन्मदं कलविलापिकलापिकदम्बकम् ॥
शिशुपालवधम् ॥ ६ ॥ ३० ॥

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः * ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्त्या भुवि परिणतां रन्तिदेवस्य † कीर्त्तिम् ॥४६॥

ङ्गिकभावेन भगवन्तं कुमारम् उपासस्व इति भावः। नर्त्तयेथा इत्यत्र 'अणावकर्मकाच्चित्तवत्कर्त्तृकादित्यात्मनेपदापवादः' 'निगरणचलनार्थेभ्यश्चेति परस्मैपदं न भवति तस्य न पादम्याङ्यमाङ्यम्परिमुहरुचिनृतिवदवस इति प्रतिषेधात् ॥ ४५ ॥

आराध्येति। एनं पूर्वोक्तं शराः बाणतृणानि [शरो बाणे बाणतृणे इति शब्दार्णवे।] तेषां वनं शरवणम् [प्रनिरन्तःशरेत्यादिना णत्वम्।] तत्र भवः जन्म यस्य तं शरवणभवं देवं स्कन्दम् [शरजन्मा षडानन इत्यमरः। शरवर्ज्यो वङ्गशीहिर्य्यधिकरणो जन्माद्युत्तरपद इति वामनः। शरवर्ज्यः अगतिकत्वात् आश्रयणीय इत्यर्थः।] आराध्य उपास्य वीणिभिः वीणावद्भिः [व्रीह्यादित्वादिनिः।] सिद्धद्वन्द्वैः सिद्धमिथुनैः भगवन्तं स्कन्दम् उपवीणयितुम् आगतैः इति भावः जलकणभयात् जलसेकस्य वीणाक्वणनप्रतिबन्धकत्वात् इति भावः मुक्तमार्गः त्यक्तवर्त्मा सन् उल्लङ्घिताध्वा कियन्तम् अध्वानं गत इत्यर्थः सुरभितनयानां

* दत्तवर्त्मा। इति वा पाठः।

† यथा यज्ञो रन्तिदेवस्य राज्ञः। तथा यज्ञोऽयं तव भारताग्र्य। पारीक्षित स्वस्ति नोऽस्तु प्रियेभ्यः। महाभारतम्। आदिपर्व्व। ५२। २।

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात् प्रवाहम् ।
प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टीः
एकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४७ ॥

गवाम् आलम्भेन संज्ञपनेन जायते इति तथोक्तां भुवि लोके स्रोतोमूर्त्या प्रवाहरूपेण परिणतां रूपविशेषम् आपन्नां रन्तिदेवस्य दशपुरपतेः महाराजस्य कीर्त्तिं चर्मण्वत्याख्यां नदीम् इत्यर्थः मानयिष्यन् सत्करिष्यन् व्यालम्बेथाः आलम्ब्य अवतरेः इत्यर्थः । पुरा किल राज्ञो रन्तिदेवस्य गवालम्भेषु एकत्र सम्भृतात् रक्तनिष्यन्दात् चर्मराशेः काचित् नदी सस्यन्दे सा चर्मण्वतीति आख्यायते ॥ ४६ ॥

त्वयीति । शार्ङ्गिणः कृष्णस्य वर्णस्य कान्तेः चौरे वर्णचौरे तत्तुल्यवर्णे इत्यर्थः त्वयि जलम् आदातुम् अवनते सति पृथुम् अपि दूरभावात् दूरत्वात् तनुं सूक्ष्मतया प्रतीयमानं तस्याः सिन्धोः चर्मण्वत्याख्यायाः प्रवाहं गगने गतिर्येषां ते गगनगतयः खेचराः सिद्धगन्धर्व्वादयः [अयमपि बहुव्रीहिः पूर्ब्बवत् जन्माद्युत्तरपदेषु द्रष्टव्यः ।] नूनं सत्यं दृष्टीः आवर्ज्य नियम्य एकम् एकयष्टिकं स्थूलः महान् मध्यः मध्यमणीभूतः इन्द्रनीलः यस्य तं भुवः भूमेः मुक्तागुणं मुक्ताहारम् इव प्रेक्षिष्यन्ते । अत्र अत्यन्तनीलमेघसङ्गतस्य प्रवाहस्य भूकण्ठमुक्तागुणत्वेन उत्प्रेक्षणात् उत्प्रेक्षैव

तामुत्तीर्य्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णशारप्रभाणाम्।
कुन्दक्षेपानुगमधुकरश्रीमुषाम् आत्मविम्बं *
पात्रीकुर्वन् दशपुरवधूनेत्रकौतूहलानाम्॥ ४८॥

इत्यमिति इवशब्देन व्यज्यते। निरुक्तकारस्तु तत्र तत्रोपमा यत्र इव-शब्दस्य दर्शनमिति इवशब्ददर्शनात् अत्राप्युपमैवेति बभ्राम॥ ४७॥

तामिति। तां चर्मण्वतीम् उत्तीर्य्य भ्रुवो लताः इव भ्रूलताः [उपमिति समासः।] तासां विभ्रमाः विलासाः परिचिताः कृताः येषु तेषां पक्ष्माणि नेत्रलोमानि [पक्ष्म सूत्रे च सूक्ष्मांशे किञ्जल्के नेत्रलोमनीति शाश्वतः।] तेषाम् उत्क्षेपात् उन्नमनात् हेतोः कृष्णाश्च ताः शाराश्च कृष्णशाराः नीलशाराः [वर्णो वर्णेनेति समासः। कृष्णरक्तसिताः शारा इति यादवः। ततश्च शारशब्दात् एव सिद्धे कार्ष्ण्ये पुनः कृष्णपदोपादानं कार्ष्ण्य-प्राधान्यार्थं रक्तत्वं तु न विवक्षितम् उपचानानुसारात् तस्य स्वाभाविकस्य स्त्रीनेत्रेषु सामुद्रिकविरोधात् इतरस्य अप्रसङ्गात् क्वचित् भावकथनं तु उपपत्तिविषयम्।] उपरि विलसन्त्यः कृष्णशाराः प्रभाः येषां, तेषां कुन्दानि माघ्यकुसुमानि तेषां क्षेपः इतस्ततः चलनं तस्य अनुगाः अनुसारिणः ये मधुकराः तेषां श्रियं मुष्णन्ति इति तथोक्तानां क्षिप्यमाणकुन्दानुधावि-मधुकरकल्पानाम् इत्यर्थः दशपुरं रन्तिदेवस्य नगरं तत्र वध्वः

* श्रीयुषाम् आत्मविम्बम्। इति वा पाठः।

ब्रह्मावर्त्तं जनपदमथ च्छायया गाहमानः *

क्षेत्रं क्षत्त्रप्रधनपिशुनं कौरवं तद्भजेथाः ।

राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा

धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४९ ॥

स्त्रियः [वधूर्जाया स्नुषा स्त्री च इत्यमरः ।] तासां नेत्रकौतूहलानां नेत्राभिलाषाणां साभिलाषदृष्टीनाम् इत्यर्थः आत्मबिम्बं स्वमूर्त्तिं पात्रीकुर्वन् विषयीकुर्वन् व्रज गच्छ ॥ ४८ ॥

ब्रह्मावर्त्तमिति । अत्र मनुः सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते इति । अथ अनन्तरं ब्रह्मावर्त्तं नाम जनपदं देशं छायया अनातपमण्डलेन गाहमानः प्रविशन् नतु स्वरूपेण [पीठक्षेत्राश्रमादीनि परिहृत्यान्यतो व्रजेत् इति वचनात् ।] क्षत्त्रप्रधनपिशुनम् अद्यापि शिरःकपालादिमत्तया कुरुपाण्डवयुद्धसूचकम् इत्यर्थः [युद्धमायोधनं जन्यं प्रधनं प्रविदारणमित्यमरः ।] तत् प्रसिद्धं कुरूणाम् इदं कौरवं क्षेत्रं भजेथाः कुरुक्षेत्रं व्रज इत्यर्थः यत्र कुरुक्षेत्रे गाण्डी अस्य अस्तीति गाण्डीवं धनुर्विशेषः [गाण्ड्यजगात् संज्ञायामिति मत्वर्थीयो वप्रत्ययः । कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ इत्यमरः ।] तत् धनुः यस्य सः गाण्डीवधन्वा अर्ज्जुनः [वा संज्ञायामित्यनङादेशः ।] शितशरशतैः निशितवाणसहस्रैः राजन्यानां राज्ञां मुखानि धाराणाम् उदक-

* अथ च्छायया गाहमानः । इति वा पाठः

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां *
बन्धुप्रीत्या समरविमुखो लाङ्गली † याः सिषेवे।
कृत्वा तासामभिगममपां सौम्य सारस्वतीनाम्
अन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥ ५० ॥

धाराणां पातैः कमलानि त्वम् इव अभ्यवर्षत् अभिमुखं दृष्टवान् शरवर्षेण शिरांसि चिच्छेद इत्यर्थः ॥ ४९ ॥

हित्वेति। बन्धुप्रीत्या कुरुपाण्डवस्नेहेन नतु भयेन समरविमुखो युद्धविस्पृहः लाङ्गलम् अस्य अस्तीति लाङ्गली हलधरः अभिमतरसाम् अभीष्टस्वादां तथा रेवत्याः स्वप्रियायाः लोचने एव अङ्कः प्रतिविम्बितत्वात् चिह्नं यस्याः तां हालां सुराम् [सुरा हलिप्रिया हालेत्यमरः। अभिप्रयुक्तं देशभाषापदमित्यत्र सूत्रे हालेति देशभाषापदमप्यतीव कविप्रयोगात् साध्विति उदाजहार वामनः।] हित्वा त्यक्त्वा दुस्त्याजाम् अपि इति भावः याः सारस्वतीः अपः सिषेवे हे सौम्य सुभग त्वं तासां सरस्वत्याः नद्याः इमाः सारस्वत्यः तासाम् अभिगमं सेवां कृत्वा अन्तः अन्तरात्मनि शुद्धः निर्मलः निर्दोषः भविता [लुलृटचाविति तृच्।] अपि सद्य एव पूतो भविष्यसि इत्यर्थः [वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वर्त्तमानप्रत्ययः।] वर्णमात्रेण वर्णेन एव कृष्णः

---

* घूर्णयन् मदिरास्वादमदपाटलितद्युती।
रेवतीवदनोच्छिष्टपरिपूतपुटे दृशौ ॥ शिशुपालबधम् ॥ २ ॥ ४

† रेवतीरमणो रामः कामपालो हलायुधः। इत्यमरः।

तस्माद्गच्छेरनुकनखलं * शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः †
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ५१ ॥ ‡

श्यामः नतु पापेन इत्यर्थः अन्तःशुद्धिरेव सम्पाद्या नतु वाह्या वहिःशुद्धोऽपि सूतवधप्रायश्चित्तार्थं सारस्वतसलिलसेवी तत्र भगवान् बलभद्र एव निदर्शनम् अतो भवतापि सरस्वती सर्वथा सेवितव्या इति भावः ॥ ५० ॥

तस्मादिति । तस्मात् कुरुक्षेत्रात् कनखलस्य अद्रेः समीपे अनुकनखलम् [अनुर्यत्समयेत्यव्ययीभावः ।] शैलराजात् हिमवतः अवतीर्णां सगरतनयानां स्वर्गसोपानपङ्क्तिं स्वर्गप्राप्तिसाधनभूताम् इत्यर्थः जह्नोः नाम राज्ञः कन्यां जाह्नवीं गच्छेः गच्छ [विध्यर्थे लिङ् ।] या जाह्नवी गौर्य्याः वक्त्रे या भ्रुकुटिरचना सापत्न्यरोषात् भ्रूभङ्गकारणं तां फेनैः विहस्य हसित्वा इव

---

* तीर्थं कनखलं नाम गङ्गाद्वारेऽस्ति पावनम् ॥
कथासरित्सागरः ॥ २ तरङ्गः ॥ ४ ॥

† जलाघाताट्टहासोग्रां फेननिर्मलहासिनीम् । अयोध्याकाण्डम् ।५०।

‡ धन्या केयं स्थिता ते शिरसि, शशिकला, किन्नु नामैतदस्याः
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि, नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दुर्
देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥
मुद्राराक्षस-नान्दी ।

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्द्धलम्बी
त्वञ्चेदच्छस्फटिकविशदं तर्कयेस्तिर्य्यगम्भः।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा * ॥ ५२ ॥

[धावल्यात् फेनानां हासत्वेन उत्प्रेक्षा।] इन्दौ शिरोमाणिक्य-भूते लग्नाः ऊर्म्मयः एव हस्ताः यस्याः सा इन्दुलग्नोर्म्मिहस्ता सती शम्भोः केशग्रहणम् अकरोत् यथा काचित् प्रौढ़ा नायिका सपत्नीम् असहमाना स्ववाल्लभ्यं प्रकटयन्ती स्वभर्त्तारं सह शिरोरत्नेन केशेषु आकर्षति तद्वत् इति भावः। इदञ्च पुरा किल भगीरथप्रार्थनया भगवतीं गगनपथात् पतन्तीं गङ्गां गङ्गा-धरो जटाजूटेन जग्राहेति कथाम् उपजीव्य उक्तम् ॥ ५१ ॥

तस्या इति। सुरगज इव कश्चित् दिग्गज इव व्योम्नि पश्चात् अर्द्धं पश्चार्द्धम् [पृषोदरादित्वात् साधुः।] तेन लम्बते इति पश्चार्द्धलम्बी सन् पश्चार्द्धभागेन व्योम्नि स्थित्वा पूर्व्वार्द्धेन जलोन्मुख इत्यर्थः [केचित् पूर्व्वार्द्धलम्बीति पठन्ति] अच्छस्फटिकविशदं निर्मलस्फटिकावदातं तस्याः गङ्गायाः अम्भः तिर्य्यक् तिरश्चीनं यथा तथा पातुं त्वं तर्कयेः विचारयेः चेत् सपदि स्रोतसि प्रवाहे संसर्पन्त्या संक्रामन्त्या भवतः छायया प्रतिबिम्बेन असौ गङ्गा अस्थाने प्रयागात् अन्यत्र उपगतः प्राप्तः यमुनासङ्गमः यया सा तथाभूता इव अभिरामा स्यात् ॥ ५२ ॥

---

* सङ्गमेनाभिरामा इति वा पाठः।

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां*
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् † ॥ ५३ ॥

आसीनानामिति । आसीनानाम् उपविष्टानां मृगाणां कस्तूरिकामृगाणाम् [अन्यथा नाभिगन्धानुपपत्तेः] नाभिगन्धैः कस्तूरीगन्धैः तेषां तदुद्भवत्वात् अत एव मृगनाभिसंज्ञा च [मृगनाभिर्मृगमदः कस्तूरी चेत्यमरः ।] अथवा नाभयः कस्तूर्यः [नाभिः प्रधाने कस्तूर्यां मदे च क्वचिदीरित इति विश्वः ।] तासां गन्धैः सुरभिताः सुरभीकृताः शिलाः यस्य तं तस्याः गङ्गायाः एव प्रभवति अस्मात् इति प्रभवः कारणं तुषारैः गौरं सितम् [अवदातः सितो गौर इत्यमरः ।] अचलं प्राप्य विनीयते अनेन इति विनयनम् [करणे ल्युट्] अध्वश्रमस्य विनयने अपनोदके तस्य हिमाद्रेःशृङ्गे निषण्णः सन् शुभ्रः यः त्रिनयनस्य त्र्यम्बकस्य वृषः वृषभः [सुकृते वृषभे वृष इत्यमरः ।] तेन उत्खातेन विदारितेन पङ्केन सह उपमेयाम् उपमातुम् अर्हां शोभां वक्ष्यसि वोढासि । वहतेर्लृट् । त्रिनयनेत्यत्र पूर्वपदात् संज्ञायामग

* प्रस्थं हिमाद्रेर्मृगनाभिगन्धि ॥ कुमारसम्भवम् ॥ १ ॥ ५४ ॥
दृषदो वासितोत्सङ्गा निषण्णमृगनाभिभिः । रघुवंशम् ।
† कैलासगौरं वृषमारुरुक्षोः । रघुवंशम् । २ । ३५ ।

तञ्चेद्वायौ सरति सरलस्कन्धसङ्घट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रैः
आपन्नार्त्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम् ॥ ५४ ॥
ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तं ।

इति णत्वं न भवति क्षुभ्नादिषु चेति निषेधात् । तस्याः प्रभवम् इत्यादिना हिमाद्रौ मेघस्य वैवाहिको गृहविहारो ध्वन्यते ॥५३॥

तमिति । वायौ वनवाते सरति वाति सति सरलानां देवदारुद्रुमाणां स्कन्धाः प्रदेशविशेषाः [अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोरित्यमरः] । तेषां सङ्घट्टेन सङ्घर्षणेन जन्म यस्य स तथोक्तः [जन्मोत्तरपदत्वात् व्यधिकरणोऽपि बहुव्रीहिः साधुरित्युक्तम्] । उल्काभिः स्फुलिङ्गैः क्षपिताः निर्दग्धाः चमरीणां बालभाराः केशसमूहा येन दव एव अग्निः दवाग्निः वनवह्निः [वने च वनवह्नौ च दवो दाव इहेष्यते इति यादवः] । तं हिमाद्रिं बाधेत चेत् पीडयेत् यदि एनं दवाग्निं वारिधारासहस्रैः शमयितुम् अर्हसि युक्तश्च एतत् इत्याह उत्तमानां महतां सम्पदः समृद्धयः आपन्नानाम् आर्त्तानाम् आर्त्तिप्रशमनम् आपन्निवारणम् एव फलं प्रयोजनं यासां ताः तथोक्ताः हि अतो हिमाचलस्य दावानलः त्वया शमयितव्यः इति भावः ॥ ५४ ॥

य इति । तस्मिन् हिमाद्रौ संरम्भः कोपः [संरम्भः संकमे

तान् कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान् *
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५५ ॥

कोपे इति शब्दार्णवे]। तेन उत्पतने उत्प्लवने रभसः वेगः येषां ते तथोक्ताः [रभसो हर्षवेगयोरिति विश्वः]। ये शरभाः अष्टापद-मृगविशेषाः [शरभः शलभे चाष्टापदे प्रोक्तो मृगान्तरे इति विश्वः]। मुक्तः अध्वा शरभोत्प्लवनमार्गः येन तं भवन्तं सपदि स्वाङ्गभङ्गाय लङ्घयेयुः [सम्भावनायां लिङ्]। भवतोऽतिदूरत्वात् स्वाङ्गभङ्गातिरिक्तं फलं नास्ति लङ्घनस्य इत्यर्थः तान् शरभान् तुमुलाः सङ्कुलाः करकाः वर्षोपलाः [वर्षोपलस्तु करकेत्यमरः]। तासां वृष्टिः तस्याः पातेन अवकीर्णान् विक्षिप्तान् कुर्वीथाः कुरुष्व [विध्यर्थे लिङ्]। क्षुद्रोऽपि अधिक्षिपन् प्रतिपक्षः सद्यः प्रति-क्षेप्तव्यः इति भावः तथाहि आरभ्यन्ते इति आरम्भाः कर्म्माणि तेषु यत्नः उद्योगः स निष्फलः येषां ते तथोक्ताः निष्फलकर्म्मोप-क्रमाः इत्यर्थः अतः के वा परिभवपदं तिरस्कारपदं न स्युः न भवन्ति सर्वे एव भवन्ति इत्यर्थः। यदत्र घनोपलस्तु करक इति यादववचनात् करकशब्दस्य नियतपुंलिङ्गताभिप्रायेण करकाणाम् अवृष्टिरिति केषाञ्चित् व्याख्यानं तत् अन्ये न अनुमन्यन्ते वर्षोप-लस्तु करकेत्यमरवचनव्याख्याने क्षीरस्वामिना कमण्डलौ च करकः सुगते च विनायक इति नानार्थे पुंस्यपि वक्ष्यतीति वदता उभय-

* सञ्चूर्णय त्वमथवा करकाभिघातैः। पूर्वचातकाष्टकम्। १

तत्र व्यक्तं दृषदि चरणन्यासमर्द्धेन्दुमौलेः
शश्वत्सिद्धैरुपचितबलिं भक्तिनम्रः परीयाः ।
यस्मिन् दृष्टे करणविगमादूर्द्धमुद्धूतपापाः
सङ्कल्पन्ते * स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५६ ॥

लिङ्गताप्रकाशनात् । यादवस्य तु पुंलिङ्गताविधाने तात्पर्य्यं नतु स्त्रीलिङ्गतानिषेधे इति न तद्विरोधोऽपि । करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ । पक्षिभेदे करे चापि करका तु घनोपले इति विश्वप्रकाशवचने तु उभयलिङ्गता व्यक्तैवेति न कुत्रापि विरोधवार्त्ता अतएव रुद्रः 'वर्षोपलस्तु करका करकोऽपि च दृश्यते' ॥५५॥

तत्रेति । तत्र हिमाद्रौ दृषदि कस्याञ्चित् शिलायां व्यक्तं प्रकटं शश्वत् सदा सिद्धैः योगिभिः [सिद्धिर्निष्पत्तियोगयोरिति विश्वः] । उपचितबलिं रचितपूजाविधिम् [बलिः पूजोपहारयोरिति यादवः] । अर्द्धश्चासौ इन्दुश्चेति अर्द्धेन्दुः [अर्द्धः खण्डे समेंऽशके इति विश्वः] । स मौलौ यस्य तस्य ईश्वरस्य चरणन्यासं पादविन्यासं भक्तिः पूज्येषु अनुरागः तया नम्रः सन् परीयाः प्रदक्षिणं कुरु [परिपूर्वादिणो लिङ्] । यस्मिन् पादन्यासे दृष्टे सति उद्धूतपापाः निरस्तकल्मषाः सन्तः श्रद्दधानाः विश्वसन्तः पुरुषाः श्रद्धा विश्वासः आस्तिक्यबुद्धिरिति यावत् [अदन्तरोरुपसर्गवद्वृत्तिर्वक्तव्येति श्रत्पूर्वात् दधातेः शानच्] । करणस्य क्षेत्रस्य विगमात् ऊर्द्धं देहत्यागानन्तरम् [करणं साधकतमं क्षेत्रगात्रे-

* करणविगमादूर्द्धमुद्धूतपापाः कल्पन्तेऽस्य ॥ इति वा समीचीनः पाठः ।

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्य्यमाणाः *
संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः।

न्द्रियेष्वपीत्यमरः]। स्थिरं शाश्वतं गणानां प्रमथानां पदं स्थानम् [गणाः प्रमथसंख्यौघाः इति वैजयन्ती]। तस्य प्राप्तये सङ्कल्पन्ते समर्था भवन्ति। क्लृप्तेः पर्य्याप्तिवचनस्य अलमर्थत्वात् तद्योगे नमः स्वस्तीत्यादिना चतुर्थी अलमिति पर्य्याप्त्यर्थग्रहणमिति भाष्यकारः। [अव्यक्तं व्यञ्जयामास शिवः श्रीचरणद्वयम्। हिमाद्रौ शाम्भवादीनां सिद्धये सर्वकर्म्मणाम्। दृष्ट्वा श्रीचरणं सम्यक् साधकः स्थिरयेत्तनुम्। इच्छाधीनशरीरो हि विचरेच्च जगत्त्रयमिति शम्भुरहस्ये] ॥ ५६ ॥

शब्दायन्त इति। हे मेघ! अनिलैः पूर्य्यमाणाः कीचकाः वेणुविशेषाः [वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धता इत्यमरः]। मधुरं श्रुतिसुखं यथा तथा शब्दायन्ते शब्दं कुर्वन्ति [शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे इति क्यङ्]। अनेन वंशवाद्यसम्पत्तिरुक्ता संसक्ताभिः संयुक्ताभिः वंशवाद्यानुषक्ताभिर्वा संरक्ताभिरिति पाठे संरक्तकण्ठीभिः इत्यर्थः किन्नरीभिः किन्नरस्त्रीभिः त्रयाणां पुराणां समाहारः त्रिपुरम् [तद्धितार्थोत्तरपदेति

---

* यः पूरयन् कीचकरन्ध्रभागान्, दरीमुखोत्थेन समीरणेन।
उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम्॥
कुमारसम्भवम्। १। ८।

कीचकध्वनिहेतवः। रघुवंशम्। ४। ७३।

निर्ह्रादस्ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्
सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५७ ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम्।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥ ५८॥

समासः। पात्रादित्वात् नपुंसकत्वम्]। तस्य विजयः गीयते कन्दरेषु दरीषु [दरी तु कन्दरो वा स्त्रीत्यमरः।] ते तव निर्ह्रादः मुरजे वाद्यभेदे ध्वनिः इव मुरजध्वनिः इव इत्यर्थः स्यात् चेत् तर्हि तत्र चरणसमीपे पशुपतेः नित्यं सन्निहितस्य शिवस्य सङ्गीतं सम्यक् गीतं तत् एव अर्थः सङ्गीतार्थः सङ्गीतवस्तु [अर्थोऽभिधेयरैवस्तु प्रयोजननिवृत्तिष्वित्यमरः।] समग्रः सम्पूर्णः भावी ननु भविष्यति खलु। भविष्यति गम्यादय इति भविष्यदर्थे णिनिः ॥५७॥

प्रालेयाद्रेरिति। प्रालेयाद्रेः हिमाद्रेः उपतटं तटसमीपे [अव्ययं विभक्तीत्यादिना समीपार्थेऽव्ययीभावः।] तान् तान् [वीप्सायां द्विरुक्तिः।] विशेषान् द्रष्टव्यार्थान् [विशेषोऽवयवे द्रव्ये द्रष्टव्योत्तमवस्तुनोरिति शब्दार्णवे।] अतिक्रम्य अनुसरेः गच्छेः इति अनागतेन सम्बन्धः हंसानां द्वारं हंसद्वारम् [मानसप्रस्थायिनो हंसाः क्रौञ्चरन्ध्रेण सञ्चरन्ते इत्यागमः।] भृगुपतेः जामदग्न्यस्य यशोवर्त्म यशःप्रवृत्तिकारणमित्यर्थः यत् क्रौञ्चस्य अद्रेः रन्ध्रम् अस्ति तेन क्रौञ्चबिलेन बलेः दैत्यस्य नियमने बन्धने अभ्यु-

गत्वा चोर्द्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः *
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः। †
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः॥ ५९॥

द्युतस्य प्रवृत्तस्य विष्णोः व्यापकस्य त्रिविक्रमस्य श्यामः कृष्णवर्णः पादः इव तिर्य्यगायामेन छिद्रप्रवेशनार्थं तिरश्चीनदैर्घ्येण शोभते इति तथाविधः सन् उदीचीम् उत्तरां दिशम् अनुसरेः अनुगच्छ। पुरा किल भगवतो देवात् धूर्जटेः धनुरुपनिषदम् अधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्द्धया क्रौञ्चशिखरिणम् अतिनिशित-विशिखमुखेन हेलया मृत्पिण्डभेदं भित्त्वा ततः क्रौञ्चभेदादेव सद्यः समुज्जृम्भिते कस्मिन्नपि यशःक्षीरनिधौ निखिलमपि जगज्जालम् आप्लावितमिति कथा श्रूयते॥ ५८॥

गत्वेति। क्रौञ्चविलनिर्गमनानन्तरम् ऊर्द्ध्वञ्च गत्वा दशमुखस्य रावणस्य भुजैः बाहुभिः उच्छ्वासिताः विश्लेषिताः प्रस्थानां सानूनां सन्धयः यस्य तस्य एतेन नयनकौतुकसद्भावः उक्तः त्रिर्दश परि-माणम् एषाम् अस्तीति त्रिदशाः [संख्ययाव्ययेत्यादिना बहु-व्रीहिः। बहुव्रीहौ संख्येये डजित्यादिना समासान्तो डच्प्रत्ययः]।

---

* समुत्क्षिपन् यः पृथिवीभृतां वरं वरप्रदानस्य चकार शूलिनः।
त्रसत्तुषाराद्रिसुताससम्भ्रमस्वयङ्ग्रहाश्लेषसुखेन निष्क्रयम्॥
शिशुपालबधम्।१।५०।

† केलसः स्फटिकस्येव शुभ्रः कैलासः। शब्दस्तोममहानिधिः।

उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे *
सद्यःकृत्तद्विरदद्शनच्छेदगौरस्य तस्य ।
शोभाद्रेः स्तिमितनयनप्रेक्षणीयां भवित्रीम्
अंसन्यस्ते सति हलभृतो मेचके वाससीव ॥ ६० ॥ †

त्रिदशानां देवानां वनिताः तासां दर्पणस्य [कैलासस्य स्फटिकत्वात् रजतत्वाद्वा बिम्बग्राहित्वेन इदमुक्तम् ।] कैलासस्य अतिथिः स्याः यः कैलासः कुमुदविशदैः निर्मलैः शृङ्गाणाम् उच्छ्रायैः औन्नत्यैः खम् आकाशं वितत्य व्याप्य प्रतिदिनं दिने दिने राशीभूतः त्र्यम्बकस्य त्रिलोचनस्य अट्टहासः अतिहासः इव स्थितः । अट्टावतिशयक्षौमाविति यादवः । धावल्यात् हासत्वेन उत्प्रेक्षा । हासादीनां धावल्यं कविसमयसिद्धम् ॥ ५९ ॥

उत्पश्यामीति । स्निग्धं मसृणं भिन्नं मर्दितं च यत् अञ्जनं कज्जलं तस्य आभा इव आभा यस्य तस्मिन् त्वयि तटगते सानुगते सति सद्यः कृत्तस्य छिन्नस्य द्विरदद्शनस्य गजदन्तस्य छेदवत् गौरस्य धवलस्य तस्य अद्रेः कैलासस्य मेचके श्यामले [कृष्ण-

* क्वचित् प्रभिन्नाञ्जनराशिसन्निभैः । ऋतुसंहारवर्षावर्णना । २ ।

† तमतनुवनराजिश्यामितोपत्यकान्तं नगमुपरि हिमानीगौरम् आसाद्य जिष्णुः । व्यपगतमदरागस्यानुसस्मार लक्ष्मीम् असितमधरवासो बिभ्रतः सीरपाणेः ॥ किरातार्जुनीयम् । ४ । ६८ ।

हलधर-परिधानश्यामलैरम्बुवाहैः । शिशुपालवधम् । ४ । ६८ ।

वहसि वपुषि विशदे वसनं जलदाभम् ।
केशव धृतहलधररूप जय जगदीश हरे ॥ गीतगोविन्दः ।

हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता *
क्रीड़ाशैले यदि च विचरेत् पादचारेण गौरी ।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी † ॥ ६१ ॥
तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम् ।

नीलासितश्यामकालश्यामलमेचका इत्यमरः]। वाससो वस्त्रे अंसन्यस्ते सति हलभृतो बलभद्रस्य इव स्तिमिताभ्यां नयनाभ्यां प्रेक्षणीयां शोभां भवित्रीं भाविनीम् उत्पश्यामि शोभा भविष्यतीति तर्कयामि इत्यर्थः। श्रौती पूर्णोपमा अलङ्कारः॥ ६० ॥

हित्वेति। तस्मिन् क्रीड़ाशैले कैलासे [कैलासः कनकाद्रिश्च मन्दरो गन्धमादनः। क्रीड़ार्थं निर्मिताः शम्भोर्देवैः क्रीड़ाद्रयोऽभवन्निति शम्भुरहस्ये]। शम्भुना शिवेन भुजगः एव वलयः कङ्कणं हित्वा गौर्य्याः भीरुत्वात् त्यक्त्वा दत्तहस्ता सती गौरी पादचारेण विचरेत् यदि तर्हि अग्रयायी पुरोगतः तथा स्तम्भितो घनीभावं प्रापितः अन्तर्जलस्यौघः प्रवाहो यस्य स तथाभूतः भङ्गीनां पर्वणां भक्त्या रचनया विरचितवपुः कल्पितशरीरः सन् मणीनां तटं मणितटं तस्य आरोहणाय सोपानत्वं कुरु सोपानभावं भजेत्यर्थः ॥६१॥

तत्रेति। तत्र कैलासेऽवश्यं सर्वथा सुरयुवतयः वलयकुलि-

* नगेन्द्रतनया-नागेन्द्रकेयूरयोः। विवाहमङ्गलम् ।
† सोपानत्वं व्रजपदसुखस्पर्शमारोहणेषु ॥ इति वा पाठः ॥

ताभ्यो मोक्षस्तव यदि सखे घर्मलब्धस्य न स्यात्
क्रीड़ालोलाः श्रवणपरुषैर्गर्जितैर्भाययेस्ताः * ॥ ६२ ॥
हेमाम्भोजप्रसवि सलिलं मानसस्याददानः
कुर्वन् कामं क्षणमुखपटप्रीतिमैरावतस्य।
धुन्वन् कल्पद्रुमकिशलयान्यंशुकानीव वातैर् *
नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम्॥ ६३ ॥

शानि कङ्कणकोटयः [शतकोटिवाचिना कुलिशशब्देन कोटिमात्रं लक्ष्यते]। तैः उद्घट्टनानि प्रहाराः तैः उद्गीर्णमुत्सृष्टं तोयं येन तं त्वां यन्त्रेषु धाराः यन्त्रधाराः तासां गृहत्वं कृत्रिमधारागृहत्वं नेष्यन्ति प्रापयिष्यन्ति हे सखे मित्र घर्मे निदाघे लब्धस्य [घर्मलब्धत्वञ्चास्य देवभूमिषु सर्वदा सर्वर्त्तुसमाहारात् प्राथमिकमेघत्वाद्वा यथोक्तमाषाढ़स्य प्रथमेति]। तव ताभ्यः सुरयुवतिभ्यः मोक्षो न स्यात् यदि तदा क्रीड़ालोलाः क्रीड़ासक्ताः प्रमत्ताः इत्यर्थः ताः सुरयुवतीः श्रवणपरुषैः कर्णकटुभिः गर्ज्जितैः करणैः भाययेः त्रासयेः। अत्र हेतुभयाभावात् आत्मनेपदं षुगागमश्च न ॥६२॥

हेमेति। हे जलद हेमाम्भोजानां प्रसवि जनकम् [जिदृक्षीत्यादिना इनिप्रत्ययः]। मानसस्य सरसः सलिलम् आददानः पिवन् इत्यर्थः तथा ऐरावतस्य इन्द्रगजस्य कामचारित्वाद्वा शिव-

* वातैर्विधूनय विभावय भीमनादैः। पूर्वचातकाद्यकम्। १।

तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन् ।

सेवार्थम् इन्द्रागमनाद्वा समागतस्य इति भावः क्षणे जलदानकाले मुखे पटेन या प्रीतिः तां कुर्वन् तथा कल्पद्रुमाणां किशलयानि पल्लवभूतानि अंशुकानि सूक्ष्मवस्त्राणि इव [अंशुकं वस्त्रमात्रे स्यात् परिधानोत्तरीययोः। सूक्ष्मवस्त्रे नातिदीप्ताविति शब्दार्णवे]। वातैः मेघवातैः धुन्वन् नाना बहुविधाः चेष्टाः तोयपातादयो येषु तैः ललितैः क्रीड़ितैः [ना भावभेदे स्त्रीनृत्ये ललितं त्रिषु सुन्दरे। अस्त्रियां प्रमदागारे क्रीड़िते जातपल्लवे इति शब्दार्णवे]। तं नगेन्द्रं कैलासं कामं यथेष्टं निर्विशैः समुपभुङ्क्ष्व [निर्वेशो भृतिभोगयोरित्यमरः]। यथेच्छविहारो मित्रगृहेषु मैत्र्याः फलं सहजमित्रञ्च ते कैलासः मेघपर्वतयोः अब्जसूर्ययोः अग्निचन्द्रयोः शिखिजीमूतयोः समीराग्न्योः मित्रता स्वयमिति भावः॥ ६२ ॥

तस्येति। प्रणयिनः प्रियतमस्य इव तस्य कैलासस्य उत्सङ्गे ऊर्द्धभागे [उत्सङ्गो मुक्तसंयोगे सक्थ्यन्यूर्द्धतलेऽपि चेति मालतीमालायाम्]। गङ्गा दुकूलं शुभ्रवस्त्रम् इव उपमितसमासः। [दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुके इति शब्दार्णवे]। अन्यत्र तु गङ्गा इव दुकूलं तत् स्रस्तं यस्याः तां तथोक्ताम् अलकां कुवेरनगरीं दृष्ट्वा कामिनीम् इवेति शेषः हे कामचारिन् त्वं पुनः त्वं तु न ज्ञास्यसे इति न किन्तु ज्ञास्यसे एव इत्यर्थः [कामचा-

या वः काले वहति सलिलोद्गारमुच्चैर्विमाना *
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम्॥ ६४॥

रिणस्ते पूर्वमपि बहुकृत्वो दर्शनसम्भवादज्ञानमसम्भावितमेवेति निश्चयार्थं नञ्द्वयप्रयोगः तदुक्तं स्मृतिनिश्चयसिद्धार्थेषु नञ्द्वयप्रयोग इति]। उच्चैर्विमानानि उन्नतानि सप्तभूमिकभवनानि [विमानोऽस्त्री देवयाने सप्तभूमौ च सद्मनीति यादवः]। तानि यस्यां सा [मेघसंवाहनस्थानसूचनार्थम् इदं विशेषणम्]। अन्यत्र विमाना निष्कोपा या अलका वो युष्माकं काले मेघकाले इत्यर्थः [कालस्य सर्वमेघसाधारण्यात् वः इति बहुवचनम्]। सलिलम् उद्गिरतीति सलिलोद्गारं स्रवत्सलिलधारम् इत्यर्थः अभ्रवृन्दं मेघकदम्बकं कामिनी स्त्री मुक्ताजालैः मौक्तिकसरैः ग्रथितं प्रत्युप्तम् [पुंस्त्र्यां मौक्तिके मुक्तेति यादवः]। अलकम् इव चूर्णकुन्तलानि इव [जातावेकवचनम्। अलकाश्चूर्णकुन्तला इत्यमरः]। वहति बिभर्त्ति। अत्र कैलासस्य अनुकूलनायकत्वम्, अलकायाश्च स्वाधीनपतिकाख्यनायिकात्वं ध्वन्यते एकायत्तोऽनुकूलः स्यादिति [प्रियोपलालिता नित्यं स्वाधीनपतिका मतेति] च लक्षयन्ति उदाहरन्ति च लालयन् अलकप्रान्तान् रचयन् पत्रमञ्जरीम्। [एकां विनोदयन् कान्तां छायावदनुवर्त्तते इति]॥ ६४॥

---

* उच्चैर्विमानैः इति वा पाठः॥

पूर्वमेघः।

# मेघदूतम्

उत्तरमेघः।

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् *।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः *
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥ *

विद्युत्वन्तमिति। यत्र अलकायां ललिताः रम्याः वनिताः स्त्रियो येषु ते सह चित्रैः वर्त्तन्त इति सचित्राः [आलेख्याश्चर्य्ययोश्चित्रमित्यमरः। तेन सहेति तुल्ययोग इति बहुव्रीहिः। वोपसर्ज्जनस्येति सहशब्दस्य समासः]। सङ्गीताय तौर्य्यत्रिकाय प्रहतमुरजाः ताड़ितमृदङ्गाः [मुरजा तु मृदङ्गे स्यात् ढक्कामुरजयोरपीति शब्दार्णवे]। मणिमय्यः मणिविकाराः भुवो येषु अभ्रं लिहन्तीति अभ्रंलिहानि अभ्रङ्कषाणि [वहाभ्रे लिह इति खश्

* शिखरासक्तमेघानाम् व्यज्यन्ते यत्र वेश्मनाम्।
अनुगर्ज्जितसन्दिग्धाः करणैः मुरजस्वनाः। कुमारसम्भवम् ।६।४०।

* प्रासादमभ्रङ्कषमाससाद। नैषधचरितम्। ६। ५७।

* दधदम्बुदनीलकण्ठताम्, वहदत्यच्छसुधोज्ज्वलं वपुः।
कथमच्छतु यत्र नाम न क्षितिभृन्मन्दिरमिन्दुमौलिताम्॥
नैषधचरितम्। २। ८२।

हस्ते लीलाकमलमलके * बालकुन्दानुविद्धं †
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ‡।

प्रत्ययः। अत्तोर्द्धेत्यादिना सुमागमः]। अग्राणि शिखराणि येषां ते तथोक्ताः अतितुङ्गाः इत्यर्थः प्रासादाः देवगृहाणि [प्रासादो देवभूभुजामित्यमरः]। विद्युतः अस्य सन्तीति विद्युत्वन्तं सेन्द्रचापम् इन्द्रचापवन्तं स्निग्धः आढ्यः गम्भीरः घोषः गर्ज्जितं यस्य तम् अन्तः अन्तर्गतं तोयं यस्य तं तुङ्गम् उन्नतं त्वां तैः तैः विशेषैः ललितवनितत्वादिधर्म्मैः तुलयितुं समीकर्त्तुमलं पर्य्याप्ताः। अलं भूषणपर्य्याप्तिशक्तिवारणवाचकमित्यमरः। अत्र उपमानोपमेयभूतमेघप्रासादधर्म्माणां विद्युद्वनितादीनां यथासंख्यमन्योन्यसादृश्यात् मेघप्रासादसादृश्यसिद्धिरिति विम्बप्रतिविम्बभावेनेयं पूर्णोपमा ॥१॥

सम्प्रति सर्व्वदा सर्व्वर्त्तुसम्पत्तिमाह हस्ते इति। यत्र अलकायां बधूनां स्त्रीणां हस्ते लीलार्थं कमलं लीलाकमलम् [शरल्लिङ्गमेतत् तदुक्तं शरत् पङ्कजलक्षणेति]। अलके कुन्तले जातावेकवचनम् अलकेषु इत्यर्थः बालकुन्दैः प्रत्यग्रमाघ्यकुसुमैः अनुविद्धम् अनुवेधः ग्रन्थनम् [नपुंसके भावे क्तः। यद्यपि कुन्दानां शैशिरत्वम् अस्ति माघ्यं कुन्दमित्यभिधानात् तथापि हेमन्ते प्रादुर्भावः शिशिरे प्रौढ़त्वमिति व्यवस्थाभेदेन हेमन्तकार्य्यत्वमित्याशयेन बालविशे-

---

* लीलाकमलपत्राणि गणयामास पार्वती। कुमारसम्भवम् ।६।८४।
† 'अलकं बालकुन्दानुविद्धम्' अलके बालकुन्दानुवेधः इति वा पाठः।
‡ आननश्रीः इति वा पाठः॥

चूड़ापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम॥ २॥
यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पा/
हंसश्रेणीरचितरसना नित्यपद्मा नलिन्यः।

पणम्। अलकमिति प्रथमान्तपाठे सप्तमीप्रक्रमभङ्गः स्यात्। नाथस्तु नियतपुंलिङ्गताहानिरेति दोषान्तरमाह तदसत्-स्वभाववक्राण्यलकानि तासाम् निर्धूतान्यलकानि पातितसुरः कृतस्लोऽधरः खण्डित इत्यादिषु प्रयोगेषु नपुंसकलिङ्गतादर्शनादिति]। आनने मुखे लोध्रप्रसवानां लोध्रपुष्पाणां शैशिराणां रजसा परागेण [स्यादुत्पादे फले पुष्पे प्रसवो गर्भमोचने इत्यमरः]। पाण्डुतां नीता श्रीः शोभा चूड़ापाशे केशपाशे नवकुरवकं वासन्तः पुष्पविशेषः कर्णे चारु पेशलं शिरीषं ग्रैष्मः पुष्पविशेषः सीमन्ते मस्तककेशवीथ्याम् [सीमन्तमस्त्रियां मस्तकेशवीथ्यामुदाहृतमिति शब्दार्णवे]। तव उपगमः मेघागम इत्यर्थः तत्र जातं त्वदुपगमजं वार्षिकम् इत्यर्थः नीपं कदम्बकुसुमम् सर्व्वत्र अस्तीति शेषः। अस्तिर्भवतिपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति न्यायात्। इत्थं कमलकुन्दादितत्तत्कार्य्यसमाहाराभिधर्म्मादर्थात् सर्व्वर्तुसमाहारसिद्धिः कारणं विना कार्य्यस्यासिद्धेरिति भावः॥ २॥

यत्रेति। यत्र अलकायां पादपाः वृक्षाः नित्यानि पुष्पाणि येषां ते तथा नतु ऋतुनियमादिति भावः अतएव उन्मत्तैर्भ्रमरैः मुखराः शब्दायमानाः। नलिन्यः पद्मिन्यो नित्यानि पद्मानि

केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्याः प्रदोषाः ॥ ३ ॥
आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तैर्
नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात्।
नाप्यन्यस्मात् प्रणयकलहाद्विप्रयोगोपपत्तिर्
वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥ ४ ॥ *

यासां ताः तथा नतु हेमन्तवर्जितमित्यर्थः। अतएव हंसश्रेणीभिः रचितरसना नित्यं हंसपरिवेष्टिता इत्यर्थः भवनशिखिनः क्रीड़ा-मयूरा नित्यं भास्वन्तः कलापा वर्हाणि येषां ते तथोक्ताः नतु वर्षासु एव अतएव केकाभिः उत्कण्ठा उद्ग्रीवाः। प्रदोषा रात्रयः नित्या ज्योत्स्ना यासां ताः नतु शुक्लपक्ष एव। अतएव प्रतिहता तमसां वृत्तिः व्याप्तिः येषां ते च ते रम्याश्चेति तथोक्ताः ॥ ३ ॥

आनन्दोत्थमिति। यत्र अलकायां वित्तेशानां यक्षाणाम्। [वित्ताधिपः कुवेरः स्यात् प्रभौ धनिकयक्षयोरिति शब्दार्णवे।] आनन्दोत्थम् आनन्दजन्यमेव नयनसलिलम् अन्यैर्निमित्तैः शोका-दिभिर्न। इष्टसंयोगेन प्रियजनसमागमेन साध्यात् निवर्त्तनीयान्मल-प्रतीकारार्थः। कुसुमशरजात् मदनशरजादन्यस्तापो नास्ति। प्रणय-

* यौवनान्तं वयो यस्मिन् नान्तकः कुसुमायुधात्।
रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्ययः। कुमारसम्भवम् ।६।४४।

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि *
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ५ ॥

कामहादन्यस्मात् कारणाद्वियोगोपपत्तिः विरहप्राप्तिरपि नास्ति । किञ्च यौवनादन्यत् वयोवार्द्धकं नास्ति । श्लोकद्वयं प्रक्षिप्तम् ॥ ४ ॥

यस्यामिति । यस्याम् अलकायां यक्षाः देवयोनिविशेषाः उत्तमस्त्रीसहायाः ललिताङ्गनासहचराः सन्तः सितमणिमयानि स्फटिकमणिमयानि चन्द्रकान्तमयानि वा अत एव ज्योतिषां तारकाणां छायाः प्रतिबिम्बानि एव कुसुमानि तैः रचितानि परिष्कृतानि [ज्योतिस्ताराग्निभाज्वालादृक्पुत्त्रार्थाध्वरात्मस्विति वैजयन्ती ] । एतेन पानभूमेर् अम्लानशोभत्वम् उक्तं हर्म्यस्थलानि एत्य प्राप्य त्वद्गम्भीरध्वनिः इव ध्वनिः येषां तेषु पुष्करेषु वाद्यभाण्डमुखेषु [पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले इत्यमरः] । शनकैः मन्दम् आहतेषु सत्सु एतच्च नृत्यगीतयोरप्युपलक्षणम् कल्पवृक्षप्रसूतं कल्पवृक्षस्य काङ्क्षितार्थप्रदत्वात् मध्वपि तत्र प्रसूतम् रतिः फलं यस्य तत् रतिफलाख्यं मधु मद्यम् आसे-

* स्फटिकोपलविग्रहा गृहाः । नैषधचरितम् । २ । ७४ ।

† यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु ।
ज्योतिषाम् प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् । कुमारसम्भवम् ।६।४२।

मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भिर् *
मन्दाराणामनुतटरुहां † छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीडन्ते मणिभिरमरप्रार्थिता यत्र कन्याः ॥ ६ ॥

नन्ते आदृत्य पिबन्ति इत्यर्थः । [तालक्षीरसिताम्लतामलगुडोन्म-त्ताम्बिकालाक्षयाद्विन्द्रद्रुममोरटेक्षुकदलीगुग्गुलुप्रभृतैर्युतम् । इत्थं-सुन्नधुपुष्पभङ्गुरपचितं पुष्पद्रुमूलावृतं क्वाथेन स्मरदीपनं रतिफ-लाख्यं स्वादु शीतं मधु इति मदिरार्णवे] ॥ ५ ॥

मन्दाकिन्या इति । यत्र अलकायाम् अमरप्रार्थिताः सुन्दर्य्य इत्यर्थः कन्याः यक्षकुमार्य्यः [कन्या कुमारिकानार्य्योरिति विश्वः] । मन्दाकिन्याः गङ्गायाः सलिलेन शिशिरैः शीतलैः मरुद्भिः सेव्यमानाः सत्यः तथा अनुतटं तटेषु रोहन्तीति अनुतटरुहः [क्विप्] तेषां मन्दाराणां छायया अनातपेन वारितोष्णाः शमितातपाः सत्यः कनकस्य सिकतासु मुष्टिभिः निक्षेपेण गूढैः संवृतैः अत एव अन्वेष्टव्यैः मृग्यैः मणिभिः रत्नैः संक्रीडन्ते गुप्त-मणिसंज्ञया देशिकक्रीडया सम्यक् क्रीडन्ति इत्यर्थः । क्रीडोऽनु-संपरिभ्यश्चेत्यात्मनेपदम् । [रत्नादिभिर्बालुकादौ गुप्तैर्दृष्टव्यक-र्मभिः । कुमारीभिः कृता क्रीडा नाम्ना गुप्तमणिः स्मृता । राम-

* सोऽयं रम्भानटनचटुलैः सेव्यमानो मरुद्भिः । उद्धवसन्देशः । ३१ ।
† आसन्नतास्तीरमन्दारकुसुमोत्किरवीचिषु । कुमारसम्भवम् ।६।५।

नीवीबन्धोच्छ्वसितशिथिलं यत्र विम्बाधराणां *
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु।
अर्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढ़ानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ७ ॥ †

क्रीड़ा गूढ़मणिर्गुप्तकेलिस्तुलायनम्। पिण्डकन्दुकदण्डाद्यैः स्मृता दैशिककेलय इति शब्दार्णवे] ॥ ६ ॥

नीवीति। यत्र अलकायाम् अनिभृतकरेषु चपलहस्तेषु प्रियेषु नीवी वसनग्रन्थिः [नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससीति विश्वः।] नीवी एव बन्धः नीवीबन्धः [चूतवृक्षवदपौनरुक्त्यम्।] तस्य उच्छ्वसितेन त्रुटितेन शिथिलं क्षौमं दुकूलं रागात् आक्षिपत्सु आहरत्सु सत्सु ह्रीमूढ़ानां लज्जाविधुराणां विम्बं विम्बिकाफलम् [विम्बं फलं विम्बिकायाः प्रतिविम्बे च मण्डले इति विश्वः।] विम्बम् इव अधरो यासां तासां विम्बाधराणां स्त्रीविशेषाणाम् [विशेषाः कामिनी कान्ता भीरुर्विम्बाधराङ्गनेति शब्दार्णवे।] चूर्णस्य कुङ्कुमादेः मुष्टिः अर्चिभिः मयूखैः तुङ्गान् [अर्चिः मयूखशिखयो---

* यक्षाङ्गनानाम्। इति वा पाठः।

† रतौ ह्रिया यत्र निशाम्य दीपान् जालागताभ्योऽधिगृहं गृहिण्यः बिभ्युः बिड़ालेक्षणभीषणाभ्यो वैदूर्यकुड्येषु शशिद्युतिभ्यः ॥
शिशुपालवधम् ॥ ३ ॥ ४५ ॥

नेत्रा नीताः सततगतिना यद्विमानाग्रभूमीर्
आलेख्यानां स्वजलकणिकादोषमुत्पाद्य* सद्यः ।
शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालैर्
धूमोद्गारानुकृतिनिपुणा जर्ज्जरा निष्पतन्ति ॥८॥ †

तया प्राप्य अपि विफलप्रेरणा दीपनिर्वाणाक्षमत्वात् निष्फला भवति । अत्राङ्गनानां रत्नप्रदीपनिर्वाणप्रवृत्त्या मौग्ध्यं व्यज्यते ॥७॥

नेत्रेति । हे मेघ नेत्रा प्रेरकेण सततगतिना सदागतिना वायुना [मातरिश्वा सदागतिरित्यमरः ।] यद्विमानाग्रभूमीः यस्याः अलकायाः विमानानां सप्तभूमिकभवनानाम् अग्रभूमीः उपरिभूमिकाः नीताः प्रापिताः त्वाम् इव पश्यन्ति इति तादृशाः त्वत्सदृशाः इत्यर्थः [त्यदादिषु दृशोऽनालोचने कञ् चेति कञ्-प्रत्ययः ।] जलमुचः मेघाः आलेख्यानां सचित्राणाम् [चित्रं लिखितरूपाद्यं स्यादालेख्यन्तु यत्नत इति शब्दार्णवे ।] स्वस्य जल-कणिकाभिः जलकणैः दोषं स्फोटनम् उत्पाद्य सद्यः शङ्कास्पृष्टाः इव सापराधत्वात् भयाविष्टाः इव [शङ्कावितर्कभययोरिति शब्दार्णवे ।] धूमोद्गारस्य धूमनिर्गमस्य अनुकृतौ अनुकरणे निपुणाः कुशलाः जर्ज्जराः विशीर्णाः सन्तः जालमार्गैः गवाक्षरन्ध्रैः

* नवजलकणैर्दोषमुत्पाद्य इति वा पाठः ।

† कुतूहलेनेव जवादुपेत्य प्राकारभित्त्या सहसा निषिद्धः ।
रसन्नरोदीद् भृशमम्बुवर्षव्याजेन यस्या बहिरम्बुवाहः ॥
शिशुपालबधम् ॥ ३ ॥ ४१ ॥

यत्र स्त्रीणां प्रियतमभुजोच्छ्वासितालिङ्गनानाम् *
अङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।
त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे †
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ‡ ॥९॥

निष्पतन्ति निष्क्रामन्ति । यथा केनचित् अन्तःपुरसञ्चारवता दूतेन गूढवृत्त्या रहस्यभूमिं प्रापिताः तत्र स्त्रीणां व्यभिचारदोषम् उत्पाद्य सद्यः साशङ्काः कृतवेशान्तराः जाराः चन्द्रमार्गैर्निष्क्रामन्ति तद्वदिति ध्वनिः । प्रकृतार्थे शङ्कास्पृष्टा इवेत्युत्प्रेक्षा ॥ ८ ॥

यत्रेति । यत्र अलकायां निशीथे अर्द्धरात्रे [अर्द्धरात्रनिशीथौ द्वावित्यमरः ।] त्वत्संरोधस्य मेघावरणस्य अपगमेन विशदैः निर्मलैः चन्द्रपादैः चन्द्रमरीचिभिः [पादा रश्म्यङ्घ्रितुर्य्यांशा इत्यमरः ।] स्फुटजललवस्यन्दिनः उल्वणाम्बुकणस्राविणः तन्तुजालावलम्बाः

---

* प्रियतमभुजालिङ्गनोच्छ्वासितानाम् इति वा पाठः ।
प्रियतमभुजोच्छ्वासितालिङ्गितानाम् इति वा समीचीनः पाठः '
† "चोदिताश्चन्द्रपादैः" इति "प्रेरिताश्चन्द्रपादैः" इति वा पाठः ।
‡ कान्तेन्दुकान्तोपलकुट्टिमेषु प्रतिक्षपं हर्म्यतलेषु यत्र ।
उच्चैरधःपातिपयोमुचोऽपि समूहमूहुः पयसां प्रणाल्यः ॥
शिशुपालवधम् ॥ ३ ॥ ४४ ॥
चन्द्रपादजनितप्रवृत्तिभिः चन्द्रकान्तजलबिन्दुभिर्गिरिः ।
मेखलातरुषु निद्रितानिमान् बोधयत्यसमये शिखण्डिनः ॥
कुमारसम्भवम् ॥ ८ ॥ ६७ ॥

अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठैर्
उद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्द्धम्।
वैभ्राजाख्यं * विबुधवनितावारमुख्यासहायाः
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति॥ १० ॥

वितानलम्बिसूत्रपुञ्जाधाराः तद्गुणगुम्फिताः इत्यर्थः। चन्द्रकान्ताः चन्द्रकान्तमणयः प्रियतमानां भुजैः उच्छासितानि श्रान्त्या जलसेकाय वा शिथिलितानि आलिङ्गनानि यासां तासां स्त्रीणां सुरतजनिताम् अङ्गग्लानिम् अवयवानां ग्लानतां व्यालुम्पन्ति अपनुदन्ति ॥ ९ ॥

अक्षय्येति। यत्र अलकायां क्षेतुं शक्याः क्षय्याः [क्षय्यजय्यौ शक्यार्थे इति निपातः ततो नञ्समासः]। भवनानाम् अन्तः अन्तर्भवनम् [अव्ययं विभक्तीत्यादिना अव्ययीभावः]। अक्षय्याः अन्तर्भवने निधयो येषां ते तथोक्ताः [यथेच्छभोगसम्भावनार्थमिदं विशेषणम्] विबुधवनिताः अप्सरसः ता एव वारमुख्याः वेश्याः ता एव सहायाः येषां ते तथोक्ताः [वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः। सत्कृता वारमुख्या स्यादित्यमरः]। बद्धालापाः सम्भावितसंलापाः कामिनः कामुकाः प्रत्यहम् अहनि अहनि [अव्ययं विभक्तीत्यादिना समासः]। रक्तः मधुरः कण्ठः कण्ठध्वनिः येषां ते तैः सुन्दरकण्ठध्वनिभिः धनपतियशः कुवेरकीर्त्तिम्

* एको (यक्षः) ययौ चैत्ररथप्रदेशान्। रघुवंशम्॥ ५ ॥ ६० ॥

गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्त्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजालैः स्तनपरिसरच्छिन्नसूत्रैश्च हारै-
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥११॥

उद्गायद्भिः उच्चैर्गायद्भिः देवगानस्य गान्धारग्रामत्वात् तारतरं गायद्भिः इत्यर्थः किन्नरैः सार्द्धं सह विभ्राजस्य इदं वैभ्राजं वैभ्राजम् इति आख्या यस्य तत् वैभ्राजाख्यम् [विभ्राजेन गणेन्द्रेण जातं वैभ्राजमाख्ययेति शम्भुरहस्ये]। चैत्ररथस्य नामान्तरमेतत्। बहिरुपवनं वाह्योद्यानं निर्विशन्ति अनुभवन्ति ॥ १० ॥

गत्युत्कम्पादिति। यत्र अलकायां कामिनीनाम् अभिसारिकाणां निशि भवः नैशः मार्गः सवितुः उदये सति गत्या गमनेन उत्कम्पः चलनं तस्मात् हेतोः अलकेभ्यः पतितैः मन्दारपुष्पैः सुरतरुकुसुमैः तथा पत्त्राणां पत्त्रलतानां छेदैः खण्डैः पतितैः इति शेषः तथा कर्णेभ्यः विभ्रंशन्ति इति कर्णविभ्रंशीनि तैः कनकस्य कमलैः [षष्ठ्या विवक्षितार्थलाभे सति मयटा विग्रहे अध्याहारदोषः एवमन्यत्राप्यनुसन्धेयम्]। तथा मुक्ताजालैः मौक्तिकसरैः शिरोनिहितैः इत्यर्थः तथा स्तनयोः परिसरः प्रदेशः तत्र छिन्नानि सूत्राणि येषां तैः हारैश्च सूच्यते ज्ञाप्यते मार्गपतितमन्दारकुसुमादिलिङ्गैः अयमभिसारिकाणां पन्थाः इत्यनुमीयते इत्यर्थः ॥११॥

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम्। *
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघैः
तस्यारम्भश्चतुरवनिताविभ्रमैरेव † सिद्धः॥ १२॥
वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान्।

मत्वेति। यत्र अलकायां मन्मथः कामः धनपतेः कुबेरस्य सखा धनपतिसखः [राजाहःसखिभ्यष्टच्]। तं देवं महादेवं साक्षात् वसन्तं सखिस्नेहात् निजरूपेण वसन्तं वर्त्तमानं मत्वा ज्ञात्वा भयात् आलोचनभयात् षट्पदाः एव ज्या मौर्व्वी यस्य तं चापं प्रायः प्राचुर्य्येण न वहति न बिभर्त्ति। कथं तर्हि तस्य कार्य्यसिद्धिः अत आह सभ्रूभङ्गेति। तस्य मन्मथस्य आरम्भः कामिजनविजयव्यापारः सभ्रूभङ्गं प्रहितानि प्रयुक्तानि नयनानि दृष्टयो येषु तैः तथोक्तैः कामिनः एव लक्ष्याणि तेषु अमोघैः सफलप्रयोगैः इत्यर्थः [मन्मथचापोऽपि क्वचिदपि मोघः स्यादिति भावः] चतुराश्च ताः वनिताश्च तासां विभ्रमैः विलासैः एव सिद्धः निष्पन्नः। यत् अनर्थकरं पाक्षिकफलञ्च तत्प्रयोगाद् वरं निश्चित-साधनप्रयोग इति भावः॥ १२॥

[कचधार्य्यं देहधार्य्यं परिधेयं विलेपनम्। चतुर्द्धा भूषणं प्राहुः

* अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता।
कुमारसम्भवम्॥ ४॥ १५॥

† चटुलवनिताविभ्रमैरेव। इति वा पाठः॥

लाक्षारागं चरणकमलन्यासयोग्यञ्च यस्याम्
एकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ १२ ॥
तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं *
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन ।

स्त्रीणामन्यच्च देशिकमिति रत्नाकरे] तदेतदाह वास इति । यस्याम् अलकायां चित्रं नानावर्णं वासः वसनं परिधेयमण्डनमेतत् नयनयोः विभ्रमाणाम् आदेशे उपदेशे दक्षम् अनेन विभ्रमदारा मधुनो मण्डनत्वम् अनुसन्धेयं तच्च मण्डनादिवत् देहधार्य्यं स्वभाव्यं मधु मद्यं किसलयैः पल्लवैः सह पुष्पोद्भेदम् उभयञ्चेत्यर्थः इदं तु कचधार्य्यं भूषणानां विकल्पान् विशेषान् देहधार्य्यमेतत् तथा चरणकमलयोः न्यासस्य समर्पणस्य योग्यं रज्यते अनेन इति रागः रञ्जकद्रव्यं लाक्षा एव रागः तं लाक्षारागम् इदञ्च अङ्गरागादिविलेपनमण्डनोपलक्षणं सकलं सर्वं चतुर्विधम् अपि इत्यर्थः अबलामण्डनं योषित्प्रसाधनजातम् एकः कल्पवृक्षः एव सूते जनयति न तु नानासाधनसम्पादनप्रयास इत्यर्थः ॥ १२ ॥

इत्थमलकां वर्णयित्वा तत्र स्वभवनस्य अभिज्ञानमाह तत्रेति । तत्र अलकायां धनपतिगृहान् कुवेरगृहान् उत्तरेण उत्तरस्मिन् अदूरदेशे [एनबन्यतरस्यामदूरेऽपञ्चम्या इत्येनप्प्रत्ययः । एनपा द्वितीयेतिद्वितीया । [गृहाः पुंसि च भूम्न्येव इत्यमरः ।] अस्माकम् इदम् अस्मदीयम् [वृद्धाच्छ इति छप्रत्ययः ।] आगारं गृहं सुर-

* धनपतिगृहादुत्तरेण । इति वा पाठः ॥

यस्योपान्ते * कृतकतनयः कान्तया वर्द्धितो मे †
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः ॥ १४ ॥
वापी चास्मिन् मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः ‡ स्निग्धवैदूर्य्यनालैः।

पतिधनुश्चारुणा मणिमयत्वात् अभङ्गुरत्वात् च इन्द्रचापसुन्दरेण तोरणेन बहिर्द्वारेण दूरात् लक्ष्यं दृश्यम् अनेन अभिज्ञानेन दूरत एव ज्ञातुं शक्यम् इत्यर्थः अभिज्ञानान्तरमाह यस्य आगारस्य उपान्ते प्राकारान्तःपार्श्वदेशे मे मम कान्तया वर्द्धितः पोषितः कृतकतनयः कृत्रिमसुतः.पुत्रत्वेन अभिमन्यमान इत्यर्थः हस्तप्राप्यैः हस्तावचेयैः स्तवकैः गुच्छैः नमितः [स्याद्गुच्छकस्तु स्तवक इत्यमरः।] बालो मन्दारवृक्षः कल्पवृक्षः अस्ति इति शेषः ॥ १४ ॥

इतः पञ्चभिः श्लोकैरभिज्ञानान्तरमाह वापीति। अस्मिन् मदीयागारे मरकतशिलाभिः बद्धः सोपानमार्गः यस्याः सा तथोक्ता विदूरे भवाः वैदूर्य्याः [विदूराञ्ञ्य इति ञ्यप्रत्ययः।] वैदूर्य्याणाम् विकाराः वैदूर्य्याणि [विकारार्थे अन्प्रत्ययः।] स्निग्धानि वैदूर्य्याणि नालानि येषां तैः हैमैः सौवर्णैः विकचकमलैः छन्ना वापी च अस्ति इति शेषः यस्याः वाप्याः तोये

* यस्योद्याने। इति वा पाठः ॥

† स्मरतेव सशब्दनूपुरं चरणानुग्रहमन्यदुर्लभं।
अमुना कुसुमाश्रुवर्षिणा त्वमशोकेन सुगात्रि शोच्यसे।
रघुवंशम् ॥ ८ ॥ ६३ ॥

‡ कमलमुकुलैः। इति वा पाठः ॥

यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यास्यन्ति * व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥१५॥
तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः †
क्रीड़ाशैलः कनककदलीवेष्टनप्रेक्षणीयः । ‡

कृतवसतयः कृतनिवासाः हंसाः त्वां मेघं प्रेक्ष्य अपि व्यपगतशुचः वर्षाकालेऽपि व्यपगतकलुषजलत्वात् वीतदुःखाः सन्तः सन्निकृष्टं सन्निहितं सुगमम् अपि इत्यर्थः मानसं मानससरः नाध्यास्यन्ति नोत्कण्ठिष्यन्ति। आध्यानमुत्कण्ठास्मरणमिति काशिकायाम् ॥१५॥

तस्या इति। तस्याः वाप्याः तीरे पेशलैः चारुभिः [चारौ दक्षे च पेशल इत्यमरः]। इन्द्रनीलैः रचितशिखरः इन्द्रनीलमणिमयशिखर इत्यर्थः कनककदलीनां वेष्टनेन परिधिना प्रेक्षणीयः दर्शनीयः क्रीड़ाशैलः अस्ति इति शेषः हे सखे उपान्तेषु प्रान्तेषु स्फुरिताः तड़ितः यस्य तं तथोक्तम् इदं विशेषणं कदलीसाम्यार्थम् उक्तम् इन्द्रनीलसाम्यं तु मेघस्य स्वाभाविकम् इत्यनेन सूच्यते त्वां प्रेक्ष्य मद्गेहिन्याः प्रियः इति हेतोः तस्य शैलस्य मद्गृहिणीप्रियत्वात् हेतोः इत्यर्थः कातरेण भीतेन चेतसा भयस्थाने सानन्दमेव। वस्तूनामनुभूतानां तुल्यश्रवणदर्शनात्। [श्रवणात् कीर्त्तनादापि

---

* न ध्यासन्ति। इति वा पाठः ॥

† वैदर्भीकेलिशैले मरकतशिखराद् उत्थितैरंशुदर्भैः।
नैषधचरितम् ॥ २ ॥ १०५ ॥

‡ कनककदलीवेष्टनः प्रेक्षणीयः। इति वा समीचीनः पाठः ॥

भङ्गेच्छिन्न्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततड़ितं त्वां तमेव स्मरामि ॥ १६ ॥
रक्ताशोकश्चलकिशलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य ।

आनन्दा भोग्यथा भवेदिति रत्नाकरे दर्शनात्]। त्वम् एव क्रीड़ाशैलम् एव स्मरामि एवकारो विषयान्तरव्यवच्छेदार्थः सदृशवस्त्वनुभवात् दृष्टार्थस्मृतिर्जायते इत्यर्थः ।· अतएवात्र स्मरणाख्यो अलङ्कारः तदुक्तं सदृशानुभवादन्यस्मृतिः स्मरणमुच्यते इति । निरुक्तकारस्तु त्वां तमेव स्मरामीति योजयित्वा मेघे शैलत्वारोपम् आचष्टे तद् असङ्गतम् अद्याकारारोपस्य पुरोवर्त्तिन्यनुभवात्मकत्वेन स्मरतिशब्दप्रयोगायोगात् शैलत्वभावना स्मृतिरित्यपि नोपपद्यते भावनायाः स्मृतित्वे प्रमाणाभावात् अनुभवायोगात् सादृश्योपन्यासवैयर्थ्याच्च विसदृशेऽपि शालग्रामे हरिभावनादर्शनादिति ॥ १६ ॥

रक्तेति । अत्र क्रीड़ाशैले कुरवकाः एव वृतिः आवरणं यस्य तस्य मध्ये वसन्ते भवाः माधव्यः तासां मण्डपः तस्य अतिमुक्तलतागृहस्य [अतिमुक्तः पुण्ड्रकः स्याद् वासन्ती माधवीलतेत्यमरः]। प्रत्यासन्नौ सन्निकृष्टौ चलकिशलयः चञ्चलपल्लवः अनेन वृक्षस्य पादताड़नेषु प्राञ्जलित्वं व्यज्यते रक्ताशोकः रक्तविशेषणं तस्य स्मरोद्दीपकत्वाद् उक्तम् । [प्रसूनकैरशोकस्तु श्वेतो रक्त इति द्विधा । बहुसिद्धिकरः श्वेतो रक्तोऽत्र स्मरवर्द्धन इत्यशोककल्पे दर्शनात् ।]। कान्तः कमनीयः केसरः वकुलश्च [अथ केसरे वकुलं इत्यमरः]।

एकः सख्यास्तव सह मया वामपादाभिलाषी *
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥१७॥ †

स्त इति शेषः । एकः तयोरन्यतरः प्राथमिकत्वाद् अशोक इत्यर्थः मया सह तव सख्याः स्वप्रियाया इत्यर्थः । वामपादाभिलाषी दोहदच्छद्मनेति अत्रापि सम्बन्धनीयं स च अहं च अभिलषाव इत्यर्थः अन्यः केसरः दोहदं वृक्षादीनां प्रसवकारणं संस्कारद्रव्यम् [तरुगुल्मलतादीनामकाले कुशलैः कृतम् । पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रियेति शब्दार्णवे] । तस्य छद्मना व्याजेन [कपटोऽस्त्री व्याजदम्भोपधयश्छद्म कैतवे' इत्यमरः] । अस्याः तव सख्याः वदनमदिरां गण्डूषमद्यं काङ्क्षति मया सहेति अत्रापि सम्बन्धनीयम् । [अशोकवकुलयोः स्त्रीपादताड़नगण्डूषमदिरे दोहदमिति प्रसिद्धिः । स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति वकुलः शीधुगण्डूषसेकात् पादाघातादशोकस्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम् । मन्दारो नर्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवातात् चूतो गीतान्नमेरुर्विकसति च पुरोनृत्तनात् कर्णिकारः] ॥ १७ ॥

---

* असूत सद्यः कुसुमान्यशोकः स्कन्धात् प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां सम्पर्कमाशिञ्जितनूपुरेण ॥
कुमारसम्भवम् । ३। २६ ।

† कुसुमं कृतदोहदस्त्वया यदशोकोऽयमुदीरयिष्यति । रघुवंशम् ॥८॥६८॥

‡ पादाहतः प्रमदया विकसत्यशोकः
शोकं जहाति वकुलो मुखशीधुसिक्तः ।
आलिङ्गितः कुरवकः कुरुते प्रकाशम्
आलोकितस्तिलक उत्कलिका विभाति ॥

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टिर् *
मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिञ्जावलयसुभगैः † नर्त्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद् वः ॥ १८ ॥

तन्मध्ये इति । किञ्चेति चार्थः तन्मध्ये तयोर्वृक्षयोर्मध्ये अनतिप्रौढानाम् अनतिकठोराणां वंशानां प्रकाश इव प्रकाशो येषां तैः तरुणवेणुसच्छायैः मणिभिः मरकतशिलाभिः मूले बद्धा कृतवेदिकेत्यर्थः स्फटिकं स्फटिकमयं फलकं पीठं यस्याः सा काञ्चनस्य विकारः काञ्चनी सौवर्णी वासयष्टिः निवासदण्डः अस्तीति शेषः शिञ्जा भूषणध्वनिः [भूषणानान्तु शिञ्जितमित्यमरः । भिदादित्वादङ् । शिञ्जिधातुरयं तालव्यादिः नतु दन्त्यादिः] ] शिञ्जाप्रधानानि वलयानि तैः सुभगाः रम्याः तैः तालैः करतलवादनैः मम कान्तया नर्त्तितः वो युष्माकं सुहृत् सखा नीलकण्ठः मयूरः [मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुगित्यमरः] । दिवसविगमे सायंकाले यां यष्टिकाम् अध्यास्ते यष्ट्याम् आस्ते इत्यर्थः [अधिशीङ्स्थासां कर्म्मेति कर्म्मत्वात् द्वितीया] । तत्रागारमित्यारभ्य पञ्चसु श्लोकेषु समृद्धवस्तुवर्णनादुदात्तालङ्कारः तदुक्तं तदुदात्तं भवेद् यत्र समृद्धं वस्तु वर्ण्यते इति । नचैषा स्वभावोक्तिर्भाविकं वा तत्र यथास्थितवस्तुवर्णनात् अत्र तु कविप्रतिभोत्था-

---

* अलिन्दे यस्यास्ते मरकतमयी यष्टिरमला ।
श्रयालुर्यां रात्रौ मदकलकलापी कलयति ॥ हंसदूतः ॥ ४७ ॥

† शिञ्जद्वलयसुभगैः । इति वा पाठः ॥

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा ।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्य्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥१९॥
गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः *
क्रीड़ाशैले प्रथमकथिते रम्यसानौ निषण्णः ।

पितसम्भाव्यमानैश्वर्य्यशालिवस्तुवर्णनात् आरोपितविषयत्वमिति ताभ्यामस्य भेद इत्यलङ्कारसर्वस्वकारः ॥ १८ ॥

एभिरिति । हे साधो निपुण [साधुः समर्थो निपुणो वेति काशिकायाम्] । हृदयनिहितैः अविस्मृतैरित्यर्थः एभिः पूर्वोक्तैः लक्षणैः तोरणादिभिरभिज्ञानैः द्वारोपान्ते एकवचनमविवक्षितं द्वारपार्श्वयोरित्यर्थः लिखिते वपुषी आकृती ययोः तौ तथोक्तौ शङ्खपद्मौ नाम निधिविशेषौ [निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेरित्यमरः] । दृष्ट्वा च नूनं सत्यम् अधुना इदानीम् [अधुनेति निपातः] । मद्वियोगेन मम प्रवासेन क्षामच्छायम् उत्सवोपरमात् क्षीणकान्ति भवनं मद्गृहं लक्षयेथाः निश्चिनुयाः तथाहि सूर्य्या-पाये सति कमलं पद्मं स्वाम् आत्मीयाम् अभिख्यां शोभाम् [अभिख्या नामशोभयोरित्यमरः] । न पुष्यति न उपचिनोति खलु सूर्य्यविरहितं पद्ममिव पतिविरहितं गृहं न शोभते इत्यर्थः ॥१९॥

निजगृहनिश्चयानन्तरकृत्यमाह गत्वेति । हे मेघ शीघ्रसम्पात

* तत्परिचायहेतोः । इति वा पाठः ॥

अर्हस्यन्तर्भवनपतितां कर्त्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ २० ॥
तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी *
मध्ये क्षामा † चकितहरिणीप्रेक्षणा निम्ननाभिः ।

एव हेतुः तस्य शीघ्रप्रवेशार्थमित्यर्थः [षष्ठी हेतुप्रयोगे इति षष्ठी। सम्पातः पतने वेगे प्रवेशे वेदसंविदे इति शब्दार्णवे]। सद्यः सपदि कलभस्य करिपोतस्य तनुरिव तनुर्यस्य तस्य भावः ताम् अल्पशरीरतां गत्वा प्राप्य प्रथमकथिते तस्यास्तीरे इत्यादिना पूर्वोद्दिष्टे रम्यसानौ निषदनयोग्ये इत्यर्थः क्रीड़ाशैले निषण्णः उपविष्टः सन् अल्पाल्पा अल्पप्रकारा भाः प्रकाशो यस्याः ताम् [प्रकारे गुणवचनस्येति द्विरुक्तिः]। खद्योतानाम् आली तस्या विलसितेन स्फुरितेन निभां समानां विद्युदुन्मेषः विद्युत्प्रकाशः स एव दृष्टिः ताम् भवनस्यान्तः अन्तर्भवनं तत्र पतितां प्रविष्टां कर्तुम् अर्हसि यथा कश्चित् किञ्चिदन्विष्यन् क्वचिदुन्नते स्थित्वा शनैः शनैर् अतितरां द्राघीयसीं दृष्टिम् दृष्टदेशे पातयति तद्वदित्यर्थः ॥ २० ॥

सम्प्रति दृष्टिपातं कृतवतोऽस्याभिज्ञानं श्लोकद्वयेनाह तन्वीति । तन्वी कृशाङ्गी न तु पीवरी [अल्पं दभ्रं कृशं तनु इत्यमरः। वोतो गुणवचनादिति ङीष्]। श्यामा युवतिः [श्यामा

---

* बिम्बाधरं दशसि चेद् भ्रमर प्रियायाः। अ० शकुन्तलम् । २य अङ्कः॥
† मया सुधायां किमु तन्मुखेन्दोर् लंभा स्थिता तत्कुचयोः किमन्तः।
चिरेण तन्मध्यम् अमुष्यतास्य दृष्टिः कृशीयः स्खलनाद् भिया नु ॥
नैषधचरितम् ॥ ७ ॥ ५ ॥

श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां *
या तत्र स्याद् युवतिविषये सृष्टिराद्येव धातुः † ॥२१॥

पीवनमध्यस्था इत्युत्पलमालायाम्]। शिखराणि एषां सन्तीति शिखरिणः कोटिमन्तः [शिखरं शैलवृक्षाग्रकक्षापुलककोटिष्विति विश्वः]। शिखरिणः दशनाः दन्ताः यस्याः सा एतेनास्या भाग्यवत्त्वं पत्यायुष्करत्वञ्च सूच्यते [तदुक्तं सामुद्रिके स्निग्धाः समानरूपाः सुपङ्क्तयः शिखिनः श्लिष्टाः। दन्ता भवन्ति यासां तासां पादे जगत् सर्व्वम्। ताम्बूलरसरक्तेऽपि स्फटभासः समोदयाः। यस्याः शिखरिणो दन्ता दीर्घं जीवति तत्पतिरिति]। पक्वं परिणतं बिम्बं बिम्बिकाफलमिव अधरोष्ठो यस्याः सा पक्वबिम्बाधरोष्ठी [शाकपार्थिवादित्वान्मध्यपदलोपी समास इति वामनः। नासिकोदरोष्ठेत्यादिना ङीष्]। मध्ये क्षामा कृशोदरीत्यर्थः चकितहरिण्याः प्रेक्षणानीव प्रेक्षणानि दृष्टयो यस्याः सा तथोक्ता एतेनास्याः पद्मिनीत्वं व्यज्यते [तदुक्तं रतिरहस्ये पद्मिनीलक्षणप्रस्तावे चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे इति]। निम्ननाभिः गम्भीरनाभिः अनेन नारीणां नाभिगाम्भीर्य्यान्मदनातिरेक इति कामसूत्रार्थः सूच्यते श्रोणीभारात् अलसगमना मन्दगामिनी नतु जघनदोषात् स्तनाभ्यां स्तोकनम्रा ईषदवनता नतु वपु-

* आवर्जिता किञ्चिदिव स्तनाभ्याम्॥ कुमारसम्भवम्॥ ७॥ ५३॥
† पुराकृति स्त्रैणमिमां विधातुमभूद्विधातुः खलु हस्तलेखः।
नैषधचरितम्॥ ७॥ १५॥

तां जानीथाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्

र्दोषात् युवतय एव विषयः तस्मिन् युवतिविषये युवतीष्वधि-
कत्येत्यर्थः धातुः ब्रह्मणः आद्या सृष्टिः प्रथमशिल्पमिव स्थिता
इत्युत्प्रेक्षा प्रथमनिर्मिता युवतिरियमेवेत्यर्थः प्रायेण शिल्पिनां
प्रथमनिर्माणे प्रयत्नातिशयवशात् शिल्पनिर्माणसौष्ठवं दृश्यते
इत्याद्यविशेषणं तथाच अस्मिन् प्रपञ्चे न क्वाप्येवंविधरामणीयकं
रमणीरत्नमस्तीति भावः तदेवम्भूता या स्त्री तत्रान्तर्भवने
स्यात् तत्र निवसेदित्यर्थः ताम् इत्युत्तरश्लोकेन सम्बन्धः ॥ २१ ॥

तामिति । सहचरे सहचारिणि अनेन वियोगासहिष्णुत्वं
व्यज्यते मयि दूरीभूते दूरस्थिते सति सहचरे चक्रवाके दूरीभूते
सति चक्रवाकीं चक्रवाकवधूमिव [जातेरस्त्रीविषयादयोपधादिति
ङीष्] । परिमितकथां मितभाषिणीं एकाम् एकाकिनीं स्थितां
ताम् अन्तर्भवनगताम् मे द्वितीयं जीवितं जानीथाः जीविततुल्यां
मत्प्रेयसीमवगच्छेरित्यर्थः तन्वीत्यादिपूर्व्वलक्षणैरिति शेषः । लक्ष-
णानामन्यथाभावभ्रममाशङ्क्याह गाढ़ोत्कण्ठामिति गाढ़ोत्कण्ठां
प्रबलविरहवेदनाम् [रागे त्वलब्धविषये वेदना महती तु या ।
संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इत्यभिधानात्] ।
बालां गुरुषु विरहमहत्सु एषु वर्त्तमानेषु दिवसेषु गच्छत्सु सत्सु
शिशिरेण शिशिरकालेन मथितां पद्मिनीं वा पद्मिनीमिव
[इववद्वायथाशब्दाविति दण्डी] । अन्यरूपां पूर्व्वविपरीताकारां

गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्॥२२॥
नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम्।
हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वाद्
इन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति ॥ २३ ॥

जातां मन्ये हिमहतपद्मिनीव विरहेण अन्यादृशी जातेति तर्कयामीत्यर्थः एतावता नेयमन्येति भ्रमितव्यमिति भावः ॥२२॥

नूनमिति। प्रबलरुदितेन उच्छूने स्फुटितपुटे नेत्रे यस्य तत् [उच्छूनेति श्वयतेः कर्त्तरि क्तः आदितश्चेति निष्ठानत्वं वचिस्वपीत्यादिना सम्प्रसारणं सम्प्रसारणाच्चेति पूर्व्वरूपत्वं हल इति दीर्घः। क्वोः शूडनुनासिके चेति ऊडादेशे कृते रूपसिद्धिरिति वर्त्तमानसामीप्यप्रक्रिया प्रामादिकीत्युत्प्रेक्षा तथा सति धातोरिकारस्य गत्यभावात् ऊडादेशे क्वोरन्यत्वेन विशेषणाच्चेति]। एतेन विषादो व्यज्यते निश्वासानाम् अशिशिरतया अन्तस्तापोष्णत्वेन भिन्नवर्णः विच्छायः अधरोष्ठो यस्य तत् हस्ते न्यस्तं हस्तन्यस्तम् एतेन चिन्ता व्यज्यते लम्बालकत्वात् संस्काराभावाल्लम्बमानकुन्तलत्वात् असकलव्यक्ति असम्पूर्णाभिव्यक्ति तस्याः प्रियायाः मुखं त्वदनुसरणेन त्वदुपरोधेन क्लिष्टकान्तेः क्षीणकान्तेः इन्दोः दैन्यं शोच्यतां बिभर्त्ति नूनमिति वितर्के [नूनं तर्केऽर्थनिश्चये इत्यमरः]। पूर्व्ववत् तथापि न भ्रमितव्यमिति भावः ॥ २३ ॥

आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती।

सर्व्वविरहिणीसाधारणानि लक्षणानि सम्भावनया उत्प्रेक्ष्याणीत्याह आलोके इत्यादिभिस्त्रिभिः। हे मेघ सा मत्प्रिया बलिषु नित्येषु प्रोषितागमनार्थेषु च देवताराधनेषु व्याकुला व्यापृता वा विरहेण तनु कृशं भावगम्यं तत्कार्य्यस्य अदृष्टचरत्वात् सम्प्रति सम्भावनयोत्प्रेक्ष्यमित्यर्थः, मत्सादृश्यं मदाकारसाम्यं मत्प्रतिकृतिमित्यर्थः [यद्यपि सादृश्यं नाम प्रसिद्धवस्त्वन्तरगतमाकारसाम्यं तथापि प्रतिकृतित्वेन विवक्षितम् इतरथा लेख्यत्वासम्भवात् अमरकोशे आलेख्ये च सादृश्यमित्यभिधानाच्च]। लिखन्ती क्वचित् फलकादौ विन्यस्यन्तीति वा चित्रदर्शनस्य विरहिणीविनोदोपायत्वादिति भावः। एतच्च कामशास्त्रसंवादेन सम्यक् विवेचितमस्माभी रघुवंशसञ्जीवन्यां सादृश्यप्रतिकृतिदर्शनैः प्रियाया इत्यत्र। मधुरवचनां मञ्जुभाषिणीम् अत एव पञ्जरस्थां हिंस्रेभ्यः कृतसंरक्षणामित्यर्थः सारिकां स्त्रीपक्षिविशेषं हे रसिके भर्त्तुः स्वामिनः स्मरसि कच्चित् स्मरसि किम् [कच्चित् कामप्रवेदने इत्यमरः]। भर्त्तारं स्मरसि किमित्यर्थः [अधीगर्थदयेशां कर्म्मणीति कर्म्मणि षष्ठी]। स्मरणे कारणमाह हि यस्मात् कारणात् त्वं तस्य भर्त्तुः प्रीणातीति प्रिया [इगुपधज्ञाप्रीकिर इति कप्रत्ययः]। अतः प्रेमास्पदत्वात् स्मर्त्तुमर्हसीति भावः इत्येवं पृच्छन्ती वा वाशब्दो विकल्पे [उपमायां विकल्पे वेत्यमरः]

पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद्भर्तुः स्मरसि रसिके * त्वं हि तस्य प्रियेति॥२४॥
उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा।

ते तव आलोके दृष्टिपथे पुरा निपतति सद्यो निपतिष्यतीत्यर्थः। स्यात् प्रबन्धे पुरातीते निकटागामिके पुरेत्यमरः। यावत् पुरा-निपातयोर्लडिति लट्॥ २४॥

उत्सङ्गे इति। हे सौम्य साधो मलिनवसने [प्रोषिते मलिना कृशेति शास्त्रादित्यर्थः]। उत्सङ्गे ऊरौ वीणां निक्षिप्य मम गोत्रं नाम अङ्कः चिह्नं यस्मिन् तत् मद्गोत्राङ्कं मन्नामाङ्कं यथा तथा [गोत्रन्तु नाम्नि चेत्यमरः] विरचितानि पदानि यस्य तत् तथोक्तं गेयं गानार्हं प्रबन्धादि गीतमिति पाठे स एवार्थः उद्गातुम् उच्चै-र्गातुं कामो यस्याः सा [तुम् काममनसोरिति मकारलोपः]। देवयोनित्वात् गान्धारग्रामं गातुकामेत्यर्थः [तदुक्तं षड्जमध्यम-नामानौ ग्रामौ गायन्ति मानवाः। नतु गान्धारनामानं स लभ्यो देवयोनिभिरिति]। तथा नयनसलिलैः प्रियतमस्मृतिजनितैः अश्रुभिः आर्द्रां तन्त्रीं कथञ्चित् कृच्छ्रेण सारयित्वा आर्द्रतापहर-णाय करेण प्रमृज्य अन्यथा क्वणनासम्भवादिति भावः भूयोभूयः पुनः पुनः स्वयम् आत्मना कृतामपि विस्मरणानर्हामपीत्यर्थः

---

* निभृते ( निःशब्दे निर्जनदेशे )। इति वा पाठः

तन्त्रीमार्द्रां * नयनसलिलैः सारयित्वा कथञ्चिद्
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥ २५ ॥
शेषान्मासान् विरहदिवसस्थापितस्यावधेर्वा †
विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः ‡ ।

मूर्च्छनां स्वरारोहावरोहक्रमम् [स्वराणां स्थापनाः मान्ताः मूर्च्छनाः सप्त सप्त हीति सङ्गीतरत्नाकरे] । विस्मरन्ती वा आलोके ते निपततीति पूर्व्वेणान्वयः । विस्मरणं चात्र दयित-गुणस्मृतिजनितमूर्च्छावशादेव [तथा च रसरत्नाकरे वियोगायो-गयोरिष्टगुणानां कीर्त्तनात् स्मृतेः । साक्षात्कारोऽथवा मूर्च्छा दशधा जायते तथा] । मत्सादृश्यमित्यादिना मनःसङ्गानुवृत्तिः सूचिता ॥ २५ ॥

शेषानिति । अथवा विरहस्य दिवसः तस्मात् स्थापितस्य तत आरभ्य निश्चितस्य अवधेः अन्तस्य शेषान् गतावशिष्टान् मासान् देहलीदत्तपुष्पैः देहली द्वारस्याधारदारु [गृहावग्रहणी देहली-त्यमरः] । तत्र दत्तानि रात्रिलेन निहितानि यानि पुष्पाणि तैर्गणनया एको द्वावित्यादिसंख्यानेन भुवि भूतले विन्यस्यन्ती वा पुष्पविन्यासैर्मासान् गणयन्ती वा इत्यर्थः । यद्वा हृदये निहितः मनसि सङ्कल्पितः आरम्भः उपक्रमो यस्य तम्, अथवा हृदय-

* तन्त्रीरार्द्राः । इति वा पाठः ।
† गमनेदिवसस्थापितस्यावधेर्वा । इति वा पाठः ।
‡ देहलीमुक्तपुष्पैः । इति वा पाठः ।

मत्सङ्गं वा * हृदयनिहितारम्भमास्वादयन्ती †
प्रायेणैते रमणविरहेष्वङ्गनानां ‡ विनोदाः ॥ २६ ॥
सव्यापारामहनि न तथा पीड़येन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्व्विनोदां सखीं ते ।

निहिताः आरम्भाः चुम्बनादयो व्यापारा यस्मिन् तं मत्सङ्गं मत्सम्भोगरतिम् आस्वादयन्ती वा आलोके ते निपतति इति पूर्व्वेण सम्बन्धः । ननु कथमयं निश्चयं इत्याशङ्कामर्थान्तरन्यासेन परिहरति प्रायेण बाहुल्येन अङ्गनानां रमणविरहेषु एते पूर्व्वोक्ता विनोदाः कालयापनोपायाः । एतेन सङ्कल्पावस्था उक्ता तदुक्तं सङ्कल्पो नाथविषयो मनोरथ उदाहृत इति ॥ २६ ॥

सव्यापारामिति । हे सखे अहनि दिवसे सव्यापारां पूर्व्वोक्त-बलिचित्रलेखनादिव्यापारवतीं ते सखीं स्वप्रियां मद्वियोगः मद्विरहः तथा तेन प्रकारेण [प्रकारवचने थाल् इति थाल्प्रत्ययः] । न पीड़येत् यथा रात्राविति शेषः किन्तु रात्रौ निर्व्विनोदां निर्व्यापारां ते सखीं गुरुतरा शुक् यस्याः तां गुरुतरशुचम् अति-दुर्भरदुःखां शङ्के तर्कयामि [शङ्का वितर्कभययोरिति शब्दार्णवे] । अतो निशीथे अर्द्धरात्रे उन्निद्राम् उत्सृष्टनिद्राम् अवनिरेव शयनं शय्या यस्याः तां नियमार्थं स्थण्डिलशायिनीं साध्वीं पतिव्रताम्

* संयोगम् वा । इति वा पाठः ।
† आसादयन्ती ( प्राप्नुवती ) । इति वा पाठः ।
‡ रमणविरहे ष्वङ्गनानाम् । इति वा समीचीनः पाठः

मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनां सौधवातायनस्थः * ॥ २७ ॥
आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां †
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः ।

[साध्वी पतिव्रतेत्यमरः] अतो नान्यथा शङ्कितव्यमिति भावः तां त्वत्सखीं मत्सन्देशैः मद्वार्त्ताभिः अलं पर्य्याप्तं सुखयितुमानन्दयितुं सौधवातायनस्थः सन् पश्य। [सखा धात्री च पितरौ मित्रदूत शुकादयः । सुखयन्तीष्टकथनसुखोपायैर्वियोगिनीमिति रत्नाकरे]। दूतश्चायं मेघ इति भाव।. अनेन जागरावस्था उक्ता ॥ २७ ॥

पुनस्तामेव विशिनष्टि आधिक्षामामित्यादिभिश्चतुर्भिः । आधिना मनोव्यथया क्षामां कृशाम् [पुंस्याधिर्मानसी व्यथेत्यमरः । क्षायतेः कर्त्तरि क्तः । क्षायो म इति. निष्ठातकारस्य मकारः]। विरहे शयनं तस्मिन् विरहशयने पल्लवादिरचिते इत्यर्थः सन्निषण्णम् एकं पार्श्वं यस्याः ताम् अत एव प्राच्याः पूर्व्वस्याः दिशो मूले उदयगिरिप्रान्ते इत्यर्थः प्राचीग्रहणं क्षीणावस्था-द्योतनार्थम् मूलग्रहणं दृश्यतार्थम् कलामात्रं कला एव शेषो यस्याः तां हिमांशोः तनुं मूर्त्तिमिव स्थितां तथा या रात्रिः मया सार्द्धम् इच्छया कृतानि रतानि तैः [शाकपार्थिवादित्वान्मध्य-पदलोपी समासः]। क्षण इव नीता यापिता तां तज्जातीयाम्

* अवनि-शयनासन्न-वातायनस्थः । इति वा पाठः ।
अवनि-शयनां सन्न-वातायनस्थः । इति वा पाठः ।
† सन्निकीर्णैक-पार्श्वाम् । इति वा पाठः ।

नीता रात्रिः क्षण इव * मया सार्द्धमिच्छारतैर्या
तामेवोष्णैर्विरहमहतीम् † अश्रुभिर्यापयन्तीम् ॥२८॥
पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्व्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।
चक्षुः खेदात्सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥२९॥

एव रात्रिं विरहेन महतीं महत्त्वेन प्रतीयमानाम् उष्णैः अश्रुभिः यापयन्तीम् । [यातेर्ण्यन्तात्कृत्प्रत्ययः । अर्त्तिह्रीत्यादिना पुगागमः] । स एव कालः सुखिनामल्पः प्रतीयते दुःखिनान्तु विपरीत इति भावः एतेन कार्श्यावस्था उक्ता ॥ २८ ॥

पादानिति । जालमार्गप्रविष्टान् गवाक्षविवरगतान् अमृतशिशिरान् इन्दोः पादान् रश्मीन् पूर्व्वप्रीत्या पूर्व्वस्नेहेन पूर्व्ववद् आनन्दकरा भविष्यन्तीति बुद्ध्येति भावः अभिमुखं यथा तथा गतं तथैव सन्निवृत्तं यथा गतं तथैव प्रतिनिवृत्तं तदा तेषामतीव दुःसहत्वादिति भावः चक्षुः दृष्टिं खेदात् सलिलगुरुभिः अश्रुदुर्भरैः पक्ष्मभिः छादयन्तीम् अत एव साभ्रे दुर्दिने अह्नि दिवसे न प्रबुद्धां मेघावरणादविकसितां न सुप्ताम् अहरित्यमुकुलिताम् [उभयत्रापि नञर्थस्य नशब्दस्य सुप्सुपेति समासः] । स्थलकमलिनीमिव स्थिताम् । एतेन विषयद्वेषाख्या षष्ठी दशा सूचिता॥२९॥

---

* कथालापे कृते वृत्ते गान्धर्वोद्वाह-कर्मणि । अवर्धत तयोः प्रीतिर् दम्पत्योर्नतु यामिनी ॥ कथासरित्सागरे ॥ ३य तरङ्गः ॥ ६७ ॥

† विरह-जनितैः । इति वा पाठः ।

निश्वासेनाधरकिशलयक्लेशिना विक्षिपन्तीं
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बम्।
मत्सम्भोगः * कथमुपनयेत् † स्वप्नजोऽपीति निद्राम् ‡
आकाङ्क्षन्तीं नयनसलिलोत्पीड़रुद्धावकाशाम् ॥३०॥

निश्वासेनेति। शुद्धस्नानात् तैलादिरहितस्नानात् परुषं कठिनस्पर्शं नूनम् आगण्डलम्बम् [सुंपसुपेति समासः]। अलकं चूर्णकुन्तलान् [जातावेकवचनम्]। अधरंकिसलयं क्लेशयति क्लिश्नातीति वा तेन तथोक्तेन उष्णेनेत्यर्थः [क्लिश्यतेर्ण्यन्तात् क्लिश्नातेरण्यन्ताद्वा ताच्छील्ये णिनिः]। निश्वासेन विक्षिपन्तीं चालयन्तीं तथा स्वप्नजोऽपि स्वप्नावस्थाजन्योऽपि साक्षात्सम्भोगासम्भावादिति भावः मत्सम्भोगः कथं केनापि प्रकारेण उपनयेत् आगच्छेत् इति आशयेनेति शेषः [इतिनैवोक्तार्थत्वादप्रयोगः प्रयोगे चापौनरुक्त्यमित्यालङ्कारिकाः। प्रार्थनायां लिङ्]। नयनसलिलोत्पीड़ेन अश्रुप्रवृत्त्या रुद्धावकाशाम् आक्रान्तस्थानां दुर्लभामित्यर्थः निद्राम् आकाङ्क्षन्तीं स्वप्नहेतुत्वादिति भावः। अत्राश्रुविसर्ज्जनेन लज्जात्यागो व्यज्यते ॥ ३० ॥

---

* मत्संयोगः। इति वा पाठः।

† "कथमपि भवेत्" "क्षणमपि भवेत्"। इति पाठान्तरं।

‡ प्रजागरात् खिलीभूतस्तस्या स्वप्नसमागमः॥ अ० शकुन्तलं २ अङ्कः See उद्भवसन्देशः। १२४। उद्भवदूतः। १२६।

आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा *
शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम् † ।
स्पर्शक्लिष्टामयमितनखेनासकृत् ‡ सारयन्तीं
गण्डाभोगात् कठिनविषमामेकवेणीं करेण ॥ ३१ ॥
सा सन्न्यस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम् ।

आद्ये इति । आद्ये विरहदिवसे दाम मालां हित्वा त्यक्त्वा या शिखा बद्धा ग्रथिता शापस्यान्ते विगलितशुचा वीतशोकेन मया उद्वेष्टनीयां मोचनीयां स्पर्शक्लिष्टां स्पर्शे सति मूलकेशेषु सव्यथामित्यर्थः कठिना च सा विषमा निम्नोन्नता च ताम् [खञ्जकुब्जादिवदन्यतरस्य प्राधान्यविवक्षया विशेषणं विशेष्येण बहुलमिति समासः] । एकवेणीम् एकीभूतवेणीम् [पूर्व्वकालेत्यादिना तत्पुरुषः] । तां शिखाम् अयमिता अकर्त्तितोपान्ता नखा यस्य तेन करेण गण्डाभोगात् कपोलविस्तारात् असकृत् मुहुर्मुहुः सारयन्तीम् अपसारयन्तीं तां पश्येति पूर्व्वेण सम्बन्धः । असकृत् सारणात् चित्तविभ्रमदशा सूचिता ॥ ३१ ॥

सेति । अबला दुर्बला सन्न्यस्ताभरणं क्षमत्वात् परित्यक्ता-

---

* प्रोषितेषु पतिषु द्युयोषिताम् । गुम्फिताः शिरसि वेण्ययोऽभवन् न प्रफुल्ल-सुर-पादप-स्रजः ॥ शिशुपालवधम् ॥ १४ ॥ ३० ॥

† या मयोद्वेष्टनीया । इति वा पाठः ।

‡ अपमित-नखेन (अलक्तकादिरहितेन) इति वा पाठः ।

त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ३२ ॥

भरणम् असंकृत् अनेकश्, दुःखःदुःखेन दुःखप्रकारेण [प्रकारे गुण-वचनस्येति द्विर्भावः]। शय्योत्सङ्गे निहितं पेशलं मृदुलं गात्रं शरीरं धारयन्ती वहन्ती अनेनात्यन्ताशक्त्या मूर्च्छावस्था सूच्यते सा लग्नसखी त्वामपि नवजलमयं नवाम्बुरूपम् अस्रं वाष्पं अवश्यं सर्व्वथा मोचयिष्यति [द्विकर्म्मकत्वम्]। तथाहि प्रायः प्रायेण आर्द्रान्तरात्मा मृदुहृदयः मेघस्तु द्रवान्तःशरीरः सर्व्वः करुणा करुणामयी वृत्तिः अन्तःकरणवृत्तिर्यस्य सः करुणावृत्तिर्भवति। अस्मिन्नवसरे सर्व्वथा शीघ्रं त्वया गन्तव्यम् अनन्तरदशापरि-हारायेति सन्दर्भाभिप्रायः।

ननु किमिदमादिमां चक्षुः प्रीतिमुपेक्ष्य अवस्थान्तराण्येव तत्र-भवान् कविरादृतवान् उच्यते सम्भोगो विप्रलम्भश्च द्विधा शृङ्गार उच्यते। संयुक्तयोस्तु सम्भोगो विप्रलम्भो वियुक्तयोः। पूर्व्वानु-रागमानाख्यप्रवासकरुणात्मना। विप्रलम्भश्चतुर्धात्र प्रवासस्तत्र च त्रिधा। कार्य्यतः सम्भ्रमाच्छापादस्मिन् काव्ये तु शापजः। प्रागसङ्गतयोर्यूनोः सति पूर्व्वानुरञ्जने। चक्षुःप्रीत्यादयोऽवस्था दश स्युस्तत्क्रमो यथा। दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता-रतिः। ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश। पूर्व्वसङ्ग-तयोरेव प्रवास इति कारणात्। न तत्रापूर्व्ववत् चक्षुःप्रीतिरुत्प-त्तिमर्हति। दशाङ्गस्य तु सिद्धस्यांशविच्छेदोऽत्र वर्ण्यते। अनन्या-पूर्ववदाद्यां इति तावद्भावस्थितेः। वैयर्थ्यादादिमां हित्वा

जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्माद्
इत्थम्भूतां प्रथमविरहे तामहं तर्कयामि ।
वाचालं मां न खलु सुभगम्मन्यभावः * करोति
प्रत्यक्षं ते निखिलमचिरात् भ्रातरुक्तं मया यत् ॥३३॥

वैरस्यादन्तिमां तथा । रत्नसङ्गादीरिहाचष्ट कविरष्टाविति स्थितिः । मत्सादृश्यं लिखन्तीति पद्येऽस्मिन् प्रतिपादिता । चक्षुःप्रीतिरिति प्रोक्तं निरुत्तरकृताननम् । चक्षुःप्रीतिर्भवेच्चित्रेष्व-दृष्टचरदर्शनात् । यथा मालविकारूपमग्निमित्रस्य पश्यतः । प्रोषितानान्तु भर्तृणां क्व दृष्टादृष्टपूर्वता । अथ तत्रापि सन्देहे स्वकलत्राणि पृच्छतु । किं भर्तृप्रत्यभिज्ञा स्यात् किं वैदेशिकभावना । प्रवासादागते स्वस्मिन्नित्यलं कलहैर्वृथा ॥ ३२॥

ननु ईदृशीं दशामापन्नेति कथं त्वया निश्चितम् अत आह जाने इति हे मेघ तव सख्याः मनः मयि सम्भृतस्नेहं सञ्चितानुरागं जाने अस्मात् स्नेहज्ञानकारणात् प्रथमविरहे प्रथमग्रहणं दुःखातिशयद्योतनार्थम् तत्सखीम् इत्थम्भूतां पूर्व्वोक्तावस्थाम् आपन्नां तर्कयामि ननु सुभगमानिनामेष स्वभावो यदात्मनि स्त्रीणामनुरागप्रकटनं तत्राह वाचालमिति सुभगम् 'आत्मानं मन्यते इति सुभगम्मन्यः [आत्ममाने खश् चेति खश्प्रत्ययः । अरुर्द्विषदित्यादिना मुमागमः] । तस्य भावः सुभगम्मन्यभावः

* सुभगम् मंन्युभावम् (उत्तमं मां दीनभावः) इति वा पाठः ।

रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनो विस्मृतभ्रूविलासम्।
त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाच्या
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति *॥ ३४॥

सुभगमानित्वं मां वाचालं बहुभाषिणं न करोति खलु सौन्दर्य्याभिमानात् न प्रलपामीत्यर्थः। स्यात् जल्पकस्तु वाचालो वाचाटो बहुगर्ह्यवागित्यमरः आलजाटचौ बहुभाषिणीत्यालच्प्रत्ययः]। किन्तु हे भ्रातः मयोक्तं यदाधिचामामित्यादि तत् निखिलं सर्व्वम् अचिरात् शीघ्रमेव ते तव प्रत्यक्षं भविष्यतीति शेषः॥ ३३॥

रुद्धेति। अलकैः रुद्धाः अपाङ्गयोः प्रसराः यस्य तत् तथोक्तम् अञ्जनेन स्नेहः स्निग्धता तेन शून्यम् अपि च किञ्च मधुनः मद्यस्य प्रत्यादेशात् निराकरणात् परित्यागादित्यर्थः [प्रत्यादेशो निराकृतिरित्यमरः]। विस्मृतः भ्रूविलासः भ्रूभङ्गी येन तत् तथोक्तं नयनस्य रुद्धापाङ्गप्रसरत्वादिकं विरहसमुत्पन्नमिति भावः त्वयि आसन्ने सति स्वकुशलवार्त्ताशंसिनीति शेषः उपरि ऊर्द्धभागे स्पन्दते स्फुरति इति उपरिस्पन्दि [तथाच निमित्तनिदाने स्पन्दान्मूर्ध्नि क्षत्रलाभं भाले पट्टं शुभं भुवि। इष्टप्राप्तिं दृशोरूर्द्धमपाङ्गे हानिमादिशेदिति]। मृगाक्ष्याः त्वत्सख्याः नयनं वाममिति शेषः [वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः।

* मीनःक्षोभाकुल-कुवलय-श्री-तुलाम् एष्यतीति। इति वा पाठः।

वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयैर्
मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या ।
सम्भोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः * सरसकदलीस्तम्भगौरश्चलत्वम् ॥ ३५ ॥

स्नाने देवादिपूजायां सन्देऽलङ्करणेऽपि चेति स्त्रीणां वामभाग-प्राशस्त्यात्]। मीनक्षोभात् मीनचलनात् चलस्य कुवलयस्य श्रिया शोभया तुलां सादृश्यम् एष्यतीति तर्कयामि ॥ ३४ ॥

वाम इति । मदीयैः कररुहपदैः नखपदैः [पुनर्भवः कररुहो नखोऽस्त्री नखरोऽस्त्रियामित्यमरः]। मुच्यमानः परिहीयमाणः नखाङ्करहित इत्यर्थः [ऊर्वोर्नखपदास्पदलन्तु रतिरहस्ये कण्ठ-कचकुचपार्श्वभुजोरःश्रोणिसक्थिषु नखास्पदमाहुरिति]। चिर-परिचितं चिराभ्यस्तं मुक्ताजालं मौक्तिकसरसरं कटिभूषणं दैव-गत्या दैववशेन त्याजितः सम्प्रति नखपदोष्माभावेन शीतोप-चारस्य तस्य वैयर्थ्यादिति भावः [त्यजतेर्ण्यन्तात् कर्म्मणि क्तः। द्विकर्म्मसु पचादीनां चोपसंख्यानमिष्यते इति पचादित्वात् द्विक-र्म्मकत्वम्]। सम्भोगान्ते मम हस्तसंवाहनानां हस्तेन मर्द्दनानाम् [संवाहनं मर्द्दनं स्यादित्यमरः]। समुचितः योग्यः सरसः यः

* नागेन्द्रहस्ताः त्वचिकर्कशत्वाद् एकान्तशैत्यात् कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः ॥
कुमारसम्भवम् ॥ १ ॥ ३६ ॥

† कनककदलीस्तम्भगौरश्चलत्वमिति वा पाठः ।

तस्मिन् काले जलद यदि सा लब्धनिद्रासुखा स्याद्
अन्वास्यैनां * स्तनितविमुखो याममात्रं सहस्व † ।

परिपक्वो न शुष्कश्च स एव विवक्षितः तस्यैव पाण्डिमसम्भवात् स चासौ कदलीस्तम्भश्च स इव गौरः पाण्डुरः [गौरः करीरे सिद्धार्थे शुक्ले पीतेऽरुणेऽपि चेति मालतीमालायाम्]। अस्याः प्रियायाः वामः ऊरुः चलत्वं स्पन्दनं यास्यति प्राप्स्यते ऊरोः स्पन्दाद्रति विद्याद्वीरः प्राप्तिं सुवाससः इति निमित्तनिदाने॥३५॥

तस्मिन्निति। हे जलद तस्मिन् काले त्वदुपसर्पणकाले सा मत्प्रिया लब्धं निद्रासुखं यया तादृशी स्यात् यदि स्यात् चेत् एनां निद्राणाम् अन्वास्य पश्चादासित्वेत्यर्थः [उपसर्गवशात् सकर्मकत्वम्]। स्तनितविमुखः गर्ज्जितपराङ्मुखः निःशब्दः सन् अन्यथा निद्राभङ्गः स्यादिति भावः याममात्रं प्रहरमात्रम् [द्वौ यामप्रहरौ समावित्यमरः]। सहस्व प्रतीक्षस्व [प्रार्थनायां लोट्]। शक्तयोरेकवारसुरतस्य यामावधिकत्वात् स्वप्नेऽपि भवितव्यम् इत्यभिप्रायः [तथा च रतिसर्वस्वे एकवारावधिर्यामो रतस्य परमो मतः। चण्डशक्तिमतोर्यूनोरुत्कटक्रमवर्त्तिनोरिति]। याम-सहनस्य प्रयोजनमाह मा भूदिति अस्याः प्रियायाः प्रणयिनि प्रेयसि मयि कथञ्चित् कृच्छ्रेण स्वप्नलब्धे सति गाढोपगूढं गाढा-

* "तत्रासीनः" "अन्वासीनः"। इति पाठान्तरे।

† सहेथाः। इति वा पाठः।

मा भूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यःकण्ठच्युतभुजलताग्रन्थि गाढ़ोपगूढ़म् ॥ ३६ ॥
तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।

लिङ्गनम् [नपुंसके भावे क्तः]। सद्यः तत्क्षणं कण्ठात् च्युतः स्रस्तः भुजलतयोः ग्रन्थिः बन्धो यस्य तत् मा भूत् मास्तु कथञ्चिल्लब्धस्य आलिङ्गनस्य विघातो मा भूदित्यर्थः। नचात्र निद्रोक्तिस्तामुन्निद्रामिति पूर्वोक्तेन निद्राच्छेदेन विरुध्यते पुनः समन्यावस्थासु पाक्षिकनिद्रासम्भवात् तथा च रसरत्नाकरे अशक्ती रोदनं निद्रा निर्लज्जानर्थवाग् भ्रमः। सुप्तमादिषु जायन्ते दशाभेदेषु वासुके इति ॥ ३६ ॥

तामिति। तां प्रियां स्वस्य जलकणिकाभिः जलविन्दुभिः शीतलेन अनिलेन उत्थाप्य प्रबोध्य [एतेन तस्याः प्रभुत्वात् व्यजनानिलसमाधिर्व्यज्यते यथाह भोजराजः मृदुभिर्मर्द्दनैः पादे शीतलैर्व्यजनैस्तनौ। श्रुतौ च मधुरैर्गीतैर्निद्रातो बोधयेत् प्रभुम् इति]। अभिनवैः नूतनैः मालतीनां जालकैः समं जातीकुड्मलैः सह [सुमना मालती जातिरिति साकं सत्रा समं सहेति क्षारको जालकं क्लीवे कलिका कोरकः पुमानिति च अमरः]। प्रत्याश्वस्तां शिशिरानिलसम्पर्कात् पुनरुज्जीवितामित्यर्थः [श्वसेः कर्त्तरि क्तः। आदितश्चेति चकारादिट्प्रतिषेधः] एतेनास्याः सौकुमार्य्यं गम्यते त्वत्सनाथे त्वत्सहिते [सनाथं प्रभुमित्याहुः सहिते चित्ततापिनीति

विद्युद्गर्भः स्तिमितनयनां * त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं † प्रक्रमेथाः ‡ ॥३७॥
भर्त्तुर्मित्रं प्रियमविधवे § विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदयनिहितैर् ‖ आगतं त्वत्समीपम्।

शब्दार्णवे]। गवाक्षे स्तिमितनयनां कोऽसौ इति विस्मयनिश्चल-नेत्रां मानिनीं मनस्विनीम् अनौचित्यासहिष्णुमित्यर्थः विद्युत् गर्भः अन्तःस्था यस्य स विद्युद्गर्भः अन्तर्लीनविद्युत्क इत्यर्थः [गर्भोऽपवरकेऽन्तःस्थे कुक्षिस्थे चार्भके मत इति शब्दार्णवे]। दृष्टि-प्रतिघातेन वक्तृमुखावलोकनप्रतिबन्धकत्वात् न द्योतितव्यमिति भावः धीरः दृढ़ः सन् अन्यथा स्खलनतादित्वेनानाश्वासनप्रसङ्गा-दिति भावः स्तनितान्येव वचनानि तैः वक्तुं प्रक्रमेथाः उपक्रमस्व। विध्यर्थे लिङ्। प्रोपाभ्यां समर्थाभ्यामित्यात्मनेपदम् ॥ ३७ ॥

सम्प्रति दूतस्य श्रोतृजनाभिमुखीकरणचातुरीमुपदिशति भर्त्तुरिति। विधवा गतभर्तृका न भवतीति अविधवे सभर्तृके

---

* "विद्युत्कम्प! स्तिमितनयनां" ॥

"विद्युत्कम्पस्तिमितनयनां" ॥ इति पाठान्तरे।

† धीरध्वनितवचनैर्मानिनीं ॥ इति वा पाठः।

‡ दूत्यं स्वस्य प्रणयहृदयस्व निर्विघ्नानवद्यं धीमन् सद्यो मम कथ-यितुं वाचिकं प्रक्रमेथाः। उद्धव सन्देशः॥ १२० ॥

§ नार्य्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः॥

बालकाण्डम् ॥ १ ॥ ९२ ॥

‖ तत्सन्देशान्मनसि निहितात् ॥ इति वा पाठः।

यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ ३८ ॥
इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा *
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य † चैव ।

अनेन भर्तृजीवनसूचनात् अनिष्टागमशङ्कां वारयति मां भर्त्तुः तव पत्युः प्रियं मित्रं प्रियसुहृदं तत्रापि हृदयनिहितैः मनसि स्थापितैः तत्सन्देशैः तस्य भर्त्तुः सन्देशैः त्वत्समीपम् आगतं भर्तृसन्देशकथनार्थमागतमित्यर्थः अम्बुवाहं मेघं विद्धि जानीहि । न केवलमहं वार्त्ताहरः किन्तु घटकोऽपीत्याशयेनाह: यः अम्बुवाहः अबलानां स्त्रीणां वेणयः तासां मोक्षे मोचने उत्सुकानि पथि श्राम्यतां श्रान्तिमापन्नानां प्रोषितानां प्रवासिनां पान्थानाम् इत्यर्थः वृन्दानि सङ्घान् मन्द्रस्निग्धैः गम्भीरश्राव्यैः ध्वनिभिः गर्ज्जितैः करणैः त्वरयति । पान्थोपकारिणो मे किमु वक्तव्यं सुहृदुपकारित्वमिति भावः ॥ ३८ ॥

भर्तृसख्यादिज्ञापनस्य फलमाह इतीति । इति एवम् आख्याते सति पवनतनयं हनूमन्तं मैथिली सीतेव सा मत्प्रिया उन्मुखी उत्कण्ठया औत्सुक्येन उच्छ्वसितहृदया विकसितचित्ता

---

* दृष्टा विचिन्वता तेन लङ्कायां राक्षसी-वृता जानकी विष-वल्लीभिः परीतेव महौषधिः । तस्मै भर्त्तुरभिज्ञानं अङ्गुलीयं ददौ कपिः प्रत्युद्गतमिवानुष्णैस्तदानन्दाश्रुविन्दुभिः ॥ रघुवंशे ॥ १२ ॥ ६१ ॥ ६२ ॥

† सम्भाष्य । इति वा पाठः ।

श्रोष्यत्यस्मात् परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपगतः * सङ्गमात् किञ्चिदूनः ॥३९॥
तामायुष्मन् मम च वचनादात्मनश्चोपकर्त्तुं
ब्रूया एवं † तव सहचरो रामगिर्य्याश्रमस्थः ।

सतीं त्वां वीक्ष्य सम्भाव्य सत्कृत्य च अस्मात् भर्तृमैत्रीज्ञापनात् परं सर्व्वं श्रोतव्यम् अवहिता अप्रमत्ता सती श्रोष्यत्येव। अत्र सीताहनुमदुपमानात् अस्याः पातिव्रत्यं मेघस्य दूतगुणसम्पत्तिश्च व्यज्यते [तद्गुणास्तु रत्नाकरे ब्रह्मचारी बली धीरो मायावी मानवर्ज्जितः । धीमानुदारो निःशङ्को वक्ता दूतः स्त्रियां भवेदिति] । ननु वार्त्तामात्रश्रवणात् अस्याः को लाभ इत्याशङ्क्य अर्थान्तरं न्यस्यति हे सौम्य साधो सीमन्तिनीनां वधूनाम् [नारी सीमन्तिनी वधूरित्यमरः] । सुहृदा सुहृन्मुखेन उपगतः प्राप्तः सुहृत्पदं विप्रलम्भशङ्कानिवारणार्थं कान्तस्य वार्त्ता कान्तोदन्तः [वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादित्यमरः] । सङ्गमात् कान्तसमागमात् किञ्चिदूनः ईषदूनः तद्वद् एव आनन्दकारीत्यर्थः ॥ ३९ ॥

सम्प्रति सन्दिशति तामिति । हे आयुष्मन् [प्रशंसायां मतुप्] । परोपकारश्लाघ्यजीवित इत्यर्थः मम वचनं प्रार्थनावचनं तस्माच्च आत्मनः स्वस्य उपकर्त्तुञ्च परोपकारेण आत्मानं कृतार्थयितुमित्यर्थः [उपकारक्रियां प्रति कर्म्मत्वेऽपि तस्यानुपकरीनीत्या-

* सुहृदुपनतः ( मित्रेणानीतः ) इति वा पाठः ।

† एवं इति वा पाठः ।

अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्वाभाष्यं सुलभविपदां प्राणिनामेतदेव * ॥ ४० ॥
अङ्गेनाङ्गं प्रतनु तनुना गाढ़तप्तेन तप्तं
सास्रेणास्रद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।

दिवत् सम्बन्धमात्रविवक्षायामात्मन इति षष्ठी न विरुध्यते यथाह भारविः सा लक्ष्मीरुपकुरुते यया परेषामिति तथा श्रीहर्षस्य साधूनामुपकर्त्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् । न कुतूहलिकस्य मनश्चरितं च महात्मनां श्रोतुमिति । तथा च क्वचित् द्वितीयादर्शनात्, सर्व्वत्र तथेति नाथवचनमनाथवचन-मेव] । तां प्रियाम् एवं ब्रूयाः किमिति हे अबले तव सहचरः भर्त्ता रामगिरेः चित्रकूटस्य आश्रतेषु तिष्ठतीति रामगिर्य्या-श्रमस्थः सन् अव्यापन्नः न मृतः वियुक्तः वियोगं प्राप्तः दुःखी एवंविधः सन् त्वां कुशलं पृच्छति [दुह्यादित्वात् पृच्छतेर्द्विकर्म-कत्वम्] । तथाहि सुलभविपदाम् अयत्नसिद्धविपत्तीनां प्राणिनाम् एतदेव कुशलमेव पूर्व्वाभाष्यं प्रथममवश्यं वक्तव्यम् । कृत्याश्चेत्या वश्यकार्थे ण्यत्प्रत्ययः ॥ ४१ ॥

अङ्गेनेति । किञ्च दूरवर्त्ती दूरस्थः नच आगन्तुं शक्यते इत्याह वैरिणा विरोधिना विधिना दैवेन रुद्धमार्गः प्रतिबद्धवर्त्मा स ते सहचरः तनुना कृशेन गाढ़तप्तेन सास्रेण साश्रुणा उत्कण्ठा

---

* भूतानां हि क्षयिषु करणेष्वाद्यमाश्वास्यमेतत् । इति वा पाठः ।

उष्णोच्छ्वासं * समधिकतरोच्छ्वासिना दूरवर्त्ती
सङ्कल्पैस्तैर्विशति † विधिना वैरिणा रुद्धमार्गः ॥४१॥
शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात्।

वेदना अस्य जाता उत्कण्ठितः तेन उत्कण्ठितेन [तदस्य सञ्जातम् इत्यादिना इतच्प्रत्ययः। उत्कण्ठतेर्वा कर्त्तरि क्तः]। समधिकतरं अतिप्रबलम् उच्छ्वसितीति समधिकतरोच्छ्वासि तेन दीर्घनिश्वासिनेत्यर्थः [ताच्छील्ये णिनिः अङ्गेन स्वशरीरेण प्रतनु कृशं तप्तं वियोगदुःखेन प्लुष्टम् असद्रुतम् अश्रुक्लिन्नम् [अश्रुनेत्राम्बु रोदनञ्चास्रमस्तु चेत्यमरः]। अविरतोत्कण्ठम् अविच्छिन्नवेदनम् उष्णोच्छ्वासं तीव्रनिश्वासम् [तिग्मं तीक्ष्णं खरं तीव्रं चण्डमुष्णं पटु स्मृतमिति हलायुधः]। अङ्गं त्वदीयं शरीरं तैः स्वसंवेद्यैः सङ्कल्पैः मनोरथैः विशति एकीभवतीत्यर्थः। अत्र समानुरागित्वद्योतनाय नायकेन नायिकायाः स्वसमानावस्थत्वमुक्तम् ॥ ४१ ॥

सम्प्रति स्वावस्थानिवेदनाय प्रस्तौति शब्दाख्येयमिति। हे अबले यः ते प्रियः सखीनां पुरस्तात् अग्रे आननस्पर्शं त्वन्मुखसम्पर्कं लोभात् गार्द्ध्यात् अधरपानलोभादित्यर्थः शब्दाख्येयं शब्देन रवेण आख्येयम् उच्चैर्वाच्यम् अपि यत् तद्वचनमपीति

* दीर्घोच्छ्वासम्। इति वा पाठः।

† सङ्कल्पैस्ते विशति। इति वा पाठः

सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृश्यस्
त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ ४२ ॥
श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् । *

शेषः कर्णे कथयितुं लोलः लालसः अभूत् किल [लोलुपो लोलुभो लोलो लालसो लम्पटोऽपिचेति यादवः] । श्रवणविषयं कर्णपथम् अतिक्रान्तः तथा लोचनाभ्याम् अदृश्यः अतिदूरत्वात द्रष्टुं श्रोतुञ्च न शक्य इति भावः स ते प्रियः त्वाम् उत्कण्ठया विरचितानि पदानि सुप्तिङन्तशब्दाः वाक्यानि वा यस्य तत् तथोक्तम् [पदं शब्दे च वाक्ये चेति विश्वः] । इदं वक्ष्यमाणं श्यामास्वङ्गमित्यादिकं मन्मुखेन आह मद्व्यवधानेन स एव ब्रूते इत्यर्थः ॥ ४२ ॥

सदृशप्रतिकृतिस्वप्नदर्शनतदङ्गस्पृष्टस्पर्शाख्याश्चत्वारो विरहिणां विनोदोपायाः तथाचोक्तं पताकायां वियोगे प्रियजनसदृशानु-

* अस्याः कचानां शिखिनश्च किन्नु विधिं कलापौ विमतेरगाताम् ।
तेनायमेभिः किमपूजिपुष्पैः अभर्त्सि दत्वा स किमर्द्धचन्द्रम् ॥
नैषधचरितम् ॥७॥ २२ ॥

कलमन्यभृतासु भाषितं कलहंसीषु मदालसं गतं । पृषतीषु विलोलमीक्षितं पवनाधूतलतासु विभ्रमाः । त्रिदिवोत्सुकयाप्यवेक्ष्य मां निहिताः सत्यममी गुणास्त्वया । विरहे तव मे गुरुव्यथं हृदयं न त्ववलम्बितुं क्षमाः ॥ रघुवंशं ॥ ८ ॥ ३५ ॥ ३६ ॥

उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन्*क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥४३॥

भवनं ततश्चित्रं कर्म्म स्वपनसमये दर्शनमपि। तदङ्गस्पृष्टानामुपगतवतां स्पर्शनमपि प्रतीकारोऽनङ्गव्यथितमनसां कोऽपि गदित इति तत्र सदृशवस्तुदर्शनमाह श्यामास्विति। श्यामासु प्रियङ्गुलतासु [श्यामा तु महिलाह्वया। लता गोवन्दनी गुन्द्रा प्रियङ्गुः फलिनी फलीत्यमरः]। अङ्गं शरीरम् उत्पश्यामि सौकुमार्य्यादिसाम्यात् अङ्गमिति तर्कयामीत्यर्थः तथा चकितहरिणीनां प्रेक्षणे दृष्टिपातं शशिनि चन्द्रे वक्त्रच्छायां मुखकान्तिं तथा शिखिनां बर्हिणां बर्हभारेषु बर्हसमूहेषु केशान् प्रतनुषु स्वल्पासु नदीनां वीचिषु [अत्र वीचीनां विशेषणोपादाने न अनुक्तगुणग्रहदोषः भ्रूसाम्यनिर्वाहाय महत्त्वदोषनिराकरणार्थत्वात् तस्य तदुक्तं रसरत्नाकरे ध्वन्युत्पादे गुणोत्कर्षे भावोक्तौ दोषवारणे। विशेषणाद् विशेष्यस्य नास्त्युक्तगुणग्रह इति। गुणो विशेषणम्]। भ्रूविलासान् भ्रूपताका इति पाठे भ्रुवः पताका इवेत्युपमितिसमासः उत्पश्यामीति सर्व्वत्र सम्बध्यते। तथापि नास्ति मनोनिर्वृतिरित्याशयेनाह हन्तेति हन्त विषादे [हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरित्यमरः]। हे चण्डि कोपने [चण्डस्त्वत्यन्तकोपन इत्यमरः। गौरादित्वात् ङीष्]। उपमानकथनमात्रेण न कोपि-

* हन्तैकस्थम्। इति वा पाठः।

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलायाम्
आत्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः * ॥४४॥

तव्यमिति भावः क्वचिदपि एकस्मिन्नपि वस्तुनि ते तव सादृश्यं नास्ति अतो न निर्वृणोमीत्यर्थः । अनेन अस्य सौन्दर्य्यमनुपमम् इति व्यज्यते ॥ ४३ ॥

सम्प्रति प्रतिकृतिदर्शनमाह त्वामिति । हे प्रिये प्रणयेन प्रेमातिशयेन कुपितां कुपितावस्थायुक्तां त्वां त्वत्प्रतिकृतिमित्यर्थः धातवः गैरिकादयः [धातुर्वातादिशब्दादिगैरिकादिष्वजादिष्विति यादवः]। ते एव रागाः रञ्जकद्रव्याणि [चित्रादिरञ्जकद्रव्ये लाक्षादौ प्रणयेच्छयोः । सारङ्गादौ च रागः स्यादारुणे रञ्जने पुमानिति शब्दार्णवे]। तैः धातुरागैः शिलायां शिलापट्टे आलिख्य निर्माय आत्मानं मां मत्प्रतिकृतिमित्यर्थः ते तव चित्रगताया इत्यर्थः चरणपतितं कर्त्तुं तथा लिखितुं यावत् इच्छामि तावत् इच्छासमकालं मुहुः उपचितैः प्रवृद्धैः अस्रैः अश्रुभिः कर्तृभिः [अस्रमश्रुणि शोणिते इति विश्वः]। मे दृष्टिः आलुप्यते आव्रियते इत्यर्थः ततः दृष्टिप्रतिबन्धात् लेखनं प्रतिबध्यते इति भावः क्रूरः घातुकः [नृशंसो घातुकः क्रूर इत्यमरः]। कृतान्तः

* वाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि । अ० शकुन्तलं । षष्ठोऽङ्कः ।

मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोर्
लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥ ४५ ॥

दैवम् [कृतान्तो यमसिद्धान्तदैवाकुशलकर्मस्वित्यमरः]। तस्मिन् अपि चित्रेऽपि नौ आवयोः [युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नाविति नावादेशः] सङ्गमं सहवासं न सहते। सङ्गमालेखनमप्यावयोरसहमानं दैवमावयोः साक्षात् सङ्गमं न सहते इति किमु वक्तव्यम् अपिशब्दार्थः ॥ ४४ ॥

अधुना स्वप्नदर्शनमाह मामिति। सुप्तस्य विज्ञानं स्वप्नः [स्वप्नः सुप्तस्य विज्ञानमिति विश्वः]। सन्दर्शनं संवित् [दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्षिण संविदीति शब्दार्णवे]। स्वप्ना इति सन्दर्शनानि स्वप्नज्ञानानि चूतवृक्षादिवत् सामान्यविशेषभावेन सहप्रयोगः तेषु मया कथमपि महता प्रयत्नेन लब्धायाः गृहीतायाः दृष्टायाः इति यावत् ते तव निर्दयाश्लेषः गाढालिङ्गनं स एव हेतुः तस्य निर्दयाश्लेषार्थमित्यर्थः [षष्ठी हेतुप्रयोग इति षष्ठी]। आकाशे निर्विषये प्रणिहितभुजं प्रसारितबाहुं मां पश्यन्तीनां स्थलीदेवतानां मुक्ताः मौक्तिकानि इव स्थूलाः अश्रुलेशाः वाष्पविन्दवः तरुकिसलयेषु अनेन चेलाञ्चलेन अश्रुधारणसमाधिर्ध्वन्यते बहुशो न पतन्तीति न किन्तु पतन्त्येव इत्यर्थः। [निश्चये नञ्द्वयप्रयोगः तथाचालङ्कारिकसूत्रं स्मृतिनिश्चयसिद्धार्थेषु नञ्-

भित्त्वा सद्यः किशलयपुटान् * देवदारुद्रुमाणाम्
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।
आलिङ्ग्यन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्व्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति † ॥ ४६ ॥

ह्यप्रयोग इति । महात्मगुरुदेवानामश्रुपातः क्षितौ यदि देश भ्रंशो महादुःखं मरणञ्च भवेद् ध्रुवमिति क्षितौ देवताश्रुपात निषेधदर्शनात् यक्षस्य मरणाभावद्योतनार्थं तरुकिशलयेषु पतन्तीत्युक्तम्] ॥ ४५ ॥

इदानीं तदङ्गस्पृष्टवस्तुस्पर्शनमाह भित्त्वेति । देवदारुद्रुमाणां किशलयपुटान् पल्लवपुटान् सद्यः भित्त्वा ये तत्क्षीरस्रुतिसुरभयः तेषां देवदारुद्रुमाणां क्षीरस्रुतिभिः क्षीरनिष्यन्दैः सुरभयः सुगन्धयः तुषाराद्रिवातत्वे लिङ्गमिदं ये वाताः दक्षिणेन दक्षिण-मार्गेण [तृतीयाविधाने प्रकृत्यादिभ्य उपसंख्यानात् तृतीया समेन यातीतिवत् तत्रापि करणत्वस्य प्रतीयमानत्वात् कर्त्तृकर-णयोरेव तृतीयेति भाष्यकारः] । प्रवृत्ताः चलिताः हे गुणवति सौशील्यसौकुमार्य्यादिगुणसम्पन्ने ते तुषाराद्रिवाताः पूर्वं प्राक् एभिः वातैः तव अङ्गं स्पृष्टं भवेत् यदि किलेति सम्भावितमेत-दिति बुद्ध्येत्यर्थः [वार्त्तासम्भाव्ययोः किलेत्यमरः] । मया आलि-

* भिन्न-पल्लव-पुटो वनानिलः ॥ रघुवंशम् ॥ ६ ॥ ६८ ॥
† वोढा कुरवक-रजसां किसलय-पुट-भेद-शीकरानुगतः ।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलय-वातः ॥
मालविकाग्निमित्रम् । तृतीयोऽङ्कः ॥

संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थनं मे
गाढ़ोष्माभिः कृतमशरणं तद्वियोगव्यथाभिः ॥ ४७ ॥
नन्वात्मानं बहु विगणयन् आत्मनैवावलम्बे *
तत्कल्याणि त्वमपि सुतरां मा गमः कातरत्वम् ।

ङ्गन्ते आश्लिष्यन्ते । अत्र वायूनां स्पृश्यत्वेऽपि अमूर्त्तत्वेन आलिङ्गनायोगात् आलिङ्गन्ते इत्यभिधानं यक्षस्य उन्मत्तत्वात् प्रलपितमित्यदोष इति वदन् निरुक्तकारः स्वयमेव उन्मत्तप्रलापीत्युपेक्षणीयः ॥ ४६ ॥

सङ्क्षिप्येतेति । दीर्घाः यामाः प्रहराः यस्यां सा दीर्घयामा विरहवेदनया तथा प्रतीयमानेत्यर्थः त्रियामा रात्रिः [आद्यन्तयो रर्द्धयामयोर्दिनव्यवहारात् त्रियामेति क्षीरस्वामी] । क्षण इव कथं केन प्रकारेण सङ्क्षिप्येत लघूक्रियेत अहः अपि सर्वावस्थासु सर्वकालेषु इत्यर्थः मन्दमन्दो मन्दप्रकारः [प्रकारे गुणवचनस्येति द्विरुक्तिः । कर्मधारयवदुत्तरेष्विति कर्मधारयवद्भावात् सुपो लुक्] । मन्दमन्दातपम् अत्यल्पसन्तापं कथं स्यात् न स्यादेव हे चटुलनयने चञ्चलाक्षि इत्थम् अनेन प्रकारेण दुर्लभप्रार्थनम् अप्राप्यमनोरथं मे मम चेतः गाढ़ोष्माभिः अतितीव्राभिः तद्वियोगव्यथाभिः अशरणम् अनाथं कृतम् ॥ ४७ ॥

---

* आत्मना नावलम्बे । इति वा पाठः ॥

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा *
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण †॥ ४८॥

नच मदीयदुर्दशाश्रवणेन भेतव्यमित्याह नन्विति। ननु इति आमन्त्रणे [प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमरः]। ननु प्रिये बहु विगणयन् शापान्ते सति एवमेवं करिष्यामीति आवर्त्तयन् आत्मानम् आत्मनैवं स्वेनैव [प्रकृत्यादिभ्य उपसंख्यानम् इति तृतीया]। अवलम्बे धारयामि यथाकथञ्चित् जीवामि इत्यर्थः तत् तस्मात् कारणात् हे कल्याणि सुभगे त्वत्सौभाग्येनैव जीवामीति भावः [बह्वादिभ्यश्चेति ङीष्]। त्वमपि सुतराम् अत्यन्तं कातरत्वं भीरुत्वं मा गमः मा गच्छ (गमेर्माङि लुङ्। न माङ्योगे इत्यडागमाभावः]। तादृक्सुखिनोरावयोः ईदृशि दुःखे कथं न बिभेमीत्याशङ्क्याह कस्येति कस्य जनस्य अत्यन्तं नियतं सुखम् उपनतं प्राप्तम् एकान्ततः नियमेन दुःखं वा उपनतं किन्तु दशा अवस्था चक्रस्य रथाङ्गस्य नेमिः अन्तः [चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात् प्रधिः पुमानित्यमरः]। तस्याः क्रमेण परिपाट्या [क्रमः शक्तौ परीपाट्यामिति विश्वः]। नीचैः अधः उपरि च गच्छति प्रवर्त्तते जन्तोः सुखदुःखे पर्य्यावर्त्तेते इत्यर्थः॥ ४८॥

---

* संयोगा विप्रयोगाश्च भवन्ति बहवो नृणाम्॥
कथासरित्सागरः॥ १० तरङ्गः॥ ५॥

† चक्रवत्परिवर्त्तन्ते दुःखानि च सुखानि च। इति श्रुतिः॥

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
शेषान् मासान् गमय चतुरो लोचने मीलयित्वा । *
पश्चादावां विरहगणितं † तं तमात्माभिलाषम्
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ४९ ॥

नच निरवधिकमेतद्दुःखमित्याह शापान्त इति। शार्ङ्गं नाम धनुः पाणौ स्थितं यस्य तस्मिन् शार्ङ्गपाणौ विष्णौ [सप्तम्युपमानेत्यादिना बहुव्रीहिः। प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यात् पाणिशब्दस्योत्तरनिपातः]। भुजगः शेष एव शयनं तस्मात् उत्थिते सति मे शापान्तः शापावसानम् भविष्यतीति शेषः शेषान् अवशिष्टान् चतुरो मासान् मेघदर्शनप्रभृति हरिबोधनदिनान्तमित्यर्थः दशदिवसाधिक्यन्तु न विवक्षितमित्युक्तमेव. लोचने मीलयित्वा निमील्य गमय धैर्य्येण अतिवाहय इत्यर्थः पश्चात् अनन्तरं त्वञ्च अहञ्च आवाम् [त्यदादीनि सर्व्वैर्नित्यमित्येकशेषः। त्यदादीनां मिथोद्वन्द्वे यत्परं तच्छिष्यते इति अस्मदः शेषः]। विरहे गणितम् एवमेवं करिष्यामीति मनसि आवर्त्तितं तं तम् [वीप्सायां द्विरुक्तिः]। आत्मनोः आवयोः अभिलाषं मनोरथं परिणताः शरच्चन्द्रिकाः यासां तासु क्षपासु रात्रिषु निर्वेक्ष्यावः भोक्ष्यावहे। विशतेर्लृट्। निर्वेशो भृतिभोगयोरित्यमरः।

* कान्ते कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ ॥
अमरुशतकम् ॥ २५ ॥

† विरह-गुणितं [विरहवर्द्धितं] विरहजनितम्। इति पाठान्तरे

भूयश्चाह त्वमपि * शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वरं विप्रबुद्धा ।
सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव रमयन् कामपि त्वं मयेति ॥ ५० ॥

अत्र केचित् नभोनभस्ययोरेव वार्षिकत्वात् कथमाषाढ़ादि चतुष्टयस्य वार्षिकत्वमुक्तमिति चोदयित्वा ऋतुत्रयपक्षाश्रयणाद् अविरोध इति पर्यहारि तत्सर्वमसङ्गतम् अत्र गतशेषाश्चत्वारो मासा इत्युक्तं कविना नतु ते वार्षिका इति तस्मादनुक्तोपालम्भ एव । यच्च नाथेनोक्तं कथमाषाढ़ादिचतुष्टयात् परं शरत्काल इति तत्रापि आ कार्त्तिकसमाप्तेः शरत्कालानुवृत्तेः परिणतशरच्चन्द्रिकासु इत्युक्तं नतु तदैवशरत्प्रादुर्भाव उक्त इत्यविरोध एव ॥४८॥

सम्प्रति तस्या मेघवञ्चकत्वशङ्कानिरासाय अतिगूढ़मभिज्ञानम् उपदिशति भूय इति । हे अबले भूयः पुनरपि आह त्वद्भर्त्ता मन्मुखेनेति शेषः मेघवचनमेतत् किमित्यत आह पुराशब्दश्चिरातीते [स्यात् प्रबन्धे चिरातीते निकटागामिके पुरेत्यमरः] । पुरा पूर्वं शयने मे कण्ठलग्नापि त्वं गले बद्धास्य कथमपि गमनं न सम्भवेदिति भावः निद्रां गत्वा किमपि केन वा निमित्तेन इत्यर्थः सस्वरं सशब्दम् उच्चैरित्यर्थः रुदती सती विप्रबुद्धा आसीरिति शेषः । असकृत् बहुशः पृच्छतः रोदनहेतुमिति शेषः मे मम हे

---

* भूयश्चापि त्वमसि । इति वा पाठः ।

एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनादसितनयने मय्यविश्वासिनी भूः ।

किनव त्वं कामपि रमयन् मया स्वप्ने दृष्ट इति त्वया मान्तर्हासं सुमन्दहासं यथा तथा कथितञ्च इति त्वद्भर्त्ता भूयश्चाहेति योजना ॥ ५० ॥

एतस्मादिति । एतस्मात् पूर्व्वोक्तात् अभिज्ञायतेऽनेनेति अभिज्ञानं लक्षणं तस्य दानात् प्रापणात् मां कुशलिनं क्षेमवन्तं विदित्वा ज्ञात्वा हे असितनयने कुले जनसमूहे भवात् कौलीनात् लोकप्रवादात् एतावता कालेन परासुर्नो चेत् आगच्छतीति जनप्रवादादित्यर्थः [स्यात् कौलीनं लोकवादे युद्धे पश्वहिपक्षिणामित्यमरः] । मयि विषये अविश्वासिनी मरणशङ्किनी मा भूः न भव [भवतेर्लुङ् न माङ्योगे इत्यडागमप्रतिषेधः] । ननु दीर्घकालविप्रकर्षात् पूर्व्वस्नेहनिवृत्तिः शङ्क्या इत्याह स्नेहानिति किमपि किंवा निमित्तं न विद्यते इति शेषः स्नेहान् प्रीतीः विरहे सति अन्योन्यविप्रकर्षे सति ध्वंसिनः विनश्वरान् आहुः तत् तथा न भवतीति अभिप्रायः किन्तु ते स्नेहा अभोगात् विरहे भोगाभावात् हेतोः [प्रसज्यप्रतिषेधेऽपि नञ्समास इष्यते] । इष्टे वस्तुनि विषये उपचितः रसः स्वादः येषु ते उपचितरसाः सन्तः प्रवृद्धतृष्णा इत्यर्थः [रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोरिति विश्वः] । प्रेमराशीभवन्ति वियोगासहिष्णुत्वमापद्यन्ते इत्यर्थः । स्नेहप्रेम्णोरवस्थाभेदाद्भेदः

स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते * त्वभोगाद्
इष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ५१ ॥
आश्वास्यैवं प्रथमविरहोदग्रशोकां † सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ ५२ ॥

तदुक्तम् आलोकनाभिलाषौ रागस्नेहौ ततः प्रेमा । रतिशृङ्गारौ योगे वियोगतो विप्रलम्भश्चेति । तदेव स्फुटीकृतं रसाकरे प्रेमा दिदृक्षा रम्येषु तच्चिन्ता त्वभिलाषकः । रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया । तद्वियोगासहं प्रेम रतिस्तत्सहवर्त्तनम् । शृङ्गारस्तत्समः क्रीडा संयोगः सप्तधा क्रमादिति ॥ ५१ ॥

इत्थं स्वकुशलं सन्दिश्य तत्कुशलसन्देशानयनमिदानीं याचते आश्वास्येति । प्रथमविरहेण उदग्रशोकां तीव्रदुःखां ते सखीम् एवं पूर्वोक्तरीत्या आश्वास्य उपजीव्य त्रिनयनस्य त्र्यम्बकस्य वृषेण वृषभेण उत्खाताः अवदारिताः कूटाः शिखराणि यस्य तस्मात् [कूटोऽस्त्री शिखरं शृङ्गमित्यमरः] । शैलात्, कैलासात् आशु निवृत्तः प्रत्यावृत्तः सन् साभिज्ञानं सलक्षणं यथा तथा

---

* विरह-व्यापदस्ते त्वभोगात् इष्टे । इति वा पाठः ।

† प्रथम-विरहादुग्रशोकाम् । इति वा पाठः ॥

कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्न खलु भवतो धीरतां तर्कयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ५३ ॥ *

प्रहितं प्रेषितं कुशलं येषु तैः तस्याः त्वत्सख्याः वचोभिः ममापि प्रातःकुन्दप्रसवमिव शिथिलं दुर्बलं मम जीवितमपि धारयेथाः स्थापय । [प्रार्थनायां लिङ्] । ॥ ५२ ॥

सम्प्रति मेघस्य प्रार्थनाङ्गीकारं प्रश्नपूर्व्वकं कल्पयति कच्चि-दिति । हे सौम्य साधो, इदं मे बन्धुकृत्यं बन्धुकार्य्यम् [देवदत्तस्य गुरुकुलमितिवत् प्रयोगः] । व्यवसितं कच्चित् करिष्यामीति निश्चितं किम् [कच्चित् कामप्रवेदने इत्यमरः । अभिप्रायज्ञापनं काम प्रवेदनम्] । न च ते तूष्णीम्भावादनङ्गीकारं शङ्के यतस्त्वं स एव उचित इत्याह प्रत्यादेशात् करिष्यामीति प्रतिवचनात्

* नाऽर्थितोऽपि जलदः सलिलन्ददाति ।
सन्तः स्वयं पर-हितेषु कृताभियोगाः ॥ नीति-शतकं ॥ ८४ ॥
तृषितश्चातक-पक्षी मुदिरमुदीक्षत आकुलितो यावत् ।
तावज्जलद-वितीर्णं निपतितमम्भो वदने तस्य ॥ प्रद्युम्न-विजयः ॥
'प्रथमोऽङ्कः ॥

चातकस्त्रिचतुरान् पयःकणान् याचते जल-धरं पिपासितः सोऽपि पूरयति भूयसाम्भसा चित्रमत्र महतामुदारता । पूर्व-चातकाष्टकं ॥२॥
शमित-चातकार्त्त-स्वराः । शिशुपाल-बधं ॥ ४ ॥२४ ॥

एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्तिनो *-मे
सौहार्द्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या ।

[उक्तिराभषणं वाक्यमादेशो वचनं वच इति शब्दार्णवे]। भवतः तव धीरतां गम्भीरत्वं न तर्कयामि न समर्थये खलु। तर्हि कथमङ्गीकारज्ञानं तत्राह याचितः सन् निःशब्दोऽपि निर्गर्ज्जितोऽपि अप्रतिजानानोऽपीत्यर्थः चातकेभ्यः जलं प्रदिशसि ददासि। युक्तञ्चैतदित्याह हि यस्मात् सतां सत्पुरुषाणां प्रणयिषु याचकेषु विषये ईप्सितार्थक्रियैव अपेक्षितार्थसम्पादनमेव प्रत्युक्तं प्रतिवचनं क्रिया केवलमुत्तरमित्यर्थः। गर्ज्जति शरदि न वर्षति वर्षति वर्षासु निःस्वनो मेघः। नीचो वदति न कुरुते न वदति सुजनः करोत्येव इति भावः॥ ५३॥

सम्प्रति स्वापराधसमाधानपूर्व्वकं स्वकार्य्यस्य अवश्यकरणं प्रार्थयमानो मेघं विसृजति एतदिति हे जलद सौहार्द्दात् सुहृद्भावात् वा [हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य चेत्युभयपदवृद्धिः]। विधुरः वियुक्तः इति हेतोः मयि विषये अनुक्रोशबुद्ध्या करुणाबुद्ध्या वा अनुचिता तव अननुरूपा या प्रार्थना प्रियां प्रति सन्देशं मे हरेत्येवंरूपा तत्र वर्त्तिनः निर्बन्धपरस्य मे मम एतत् सन्देशहरणरूपं प्रियं कृत्वा सम्पाद्य प्रावृषा वर्षाभिः [स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षाः इत्यमरः]। सम्भृतश्रीः उपचितशोभः सन् इष्टान्

* एतत् कृत्वा प्रियसमुचितं प्रार्थितं चेतसो मे। इति वा पाठः॥

इष्टान् देशान् जलद विचर प्रावृषा सम्भृतश्रीर्
मा भूदेवं क्षणमपि ·

इति श्रीकालिद

उत्तरमेघः।

अभिलषितान् देशान् विचर यथेष्टदेशेषु विहर इत्यर्थः दिश
कालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति वचनात् कर्मत्वम्।
एवं मद्वत् क्षणमपि स्वल्पकालमपि ते तव विद्युता कलत्रेण
इति शेषः विप्रयोग विरहः मा भूत् मास्तु। माङ्गिल्याशिषि ·:
लुङ्। अन्ते काव्यस्य नित्यत्वात् कुर्यादाशिषमुत्तमाम्। सर्वत्र
व्याप्यते विद्वान् नायकेच्छानुरूपिणीमिति सारस्वतालङ्कारे
दर्शनात् काव्यान्ते नायकेच्छानुरूपोऽयमाशीर्वादः प्रयुक्त .
इत्यनुसन्धेयम्॥ ५४॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां
मेघसन्देशव्याख्यायां सञ्जीवन्यामुत्तरमेघः।

समाप्तोऽयं ग्रन्थः।